५. नमन्महीशमुकुटहीरहारिनखेन्दवे ।
नमः कवीन्द्रवर्याय सदानन्दितबिन्दवे ॥ १३२ ॥

६. वाडवार्त्याब्धिवडवहव्यवाडवतारिणे।
नमः कवीन्द्रवर्याय स्वेच्छा[1]सौख्यविहारिणे ॥ १३३ ॥

७. श्रीखण्डपुण्डरीकेन्दुपिण्डपाण्डुरकीर्तये ।
नमः कवीन्द्रवर्याय दयासागरमूर्तये ॥ १३४ ॥

८. गुणच्छटापटाच्छन्नसमस्तविलसद्दिशे ।
नमः कवीन्द्रवर्याय सरोजविकसद्दृशे ॥ १३५ ॥

९. दधीचिबलिकर्णादिवर्णवर्णापहारिणे ।
नमः कवीन्द्रवर्याय दानज्ञानाधिकारिणे ॥ १३६ ॥

१०. यः पठेत्स्पष्टमुत्कृष्टं कवीन्द्राष्टकमिष्टदम् ।
तुष्टः पिनष्टि तत्कष्टं स ह्यष्टापदयष्टिभिः ॥ १३७ ॥

कृष्णाचार्यस्यैतानि दश ॥[2]

१. केचिद्वेदविदग्रणीषु निरताः केचिच्च यज्ञक्रिया-
पारीणेषु परे पुराणकथकेष्वन्येऽथ सङ्गीतिषु ।
आयुर्वेदपरेषु केऽपि गणकेष्वन्ये ह हा हा कथं
कालेऽस्मिन् कवितावतारिषु न वा कोऽप्यस्ति लेशादरी ॥१३८

२. चिन्ताप्रतानपरिचुम्बितचित्तवृत्ति-
स्त्यक्तुं कविः स्वकवितां वनितामिवैषीत् ।
यावत्कृपापरवशा गिरिराजकन्या
तावत्सहासमवदत् श्रितनीपवन्या ॥ १३९ ॥

३. परोपकृतिसाहसी भुवनसीम्नि हंसीकृत-
प्रशस्तिरनिशं वशी दलितदुर्गताशीविषः ।
शशीव शुभलक्षणात्सदयमीक्षणावेक्षणा-
त्करिष्यति कवे[3] क्षणात्तव कवीन्द्रनामा क्षणात् ॥ १४० ॥

४. आस्ते कोऽप्यवनीतले परिचितः पाथोद एवोचितः
स्वोत्कर्षात्कविलोकचातकमिलच्छोकावलोपे कृती ।

१. This verse wanting in A. B. स्यिछा°, C. स्वच्छा°. २. A.C. नव.
३. C. कदेक्षणा°.

सर्वस्वीकृतशास्त्रसागरमहोदारप्रचारव्रती
सत्कीर्तिप्रतिभूरभूतविनयः श्रीमान्कवीन्द्रो यतिः ॥ १४१ ॥

५. धैर्याकूपारसीमा प्रतिभटसुषमास्तोमसोमार्यमार्य[१]
श्रीमान्कामारिवामास्तुतपदमहिमा पुण्यनामार्यधामा।
श्रीमान् धर्मात्मना यः स्फुटतरमुपमामाप भूमाविहेष्ट-
प्रेमा जीयात्कवीन्द्राभिधयतितिलकः कोऽपि वंशावतंसः ॥१४२॥

६. यदालोके लोके कविकुलकलानां सफलता
परं स्वैरं पद्मा समजनि तदागारवशगा।
यदीया सत्कीर्तिर्विहरति सदाशाऽतुलमुखे
मखेशप्रीतं तं यतिवरकवीन्द्रं श्रय सखे[२] ॥ १४३ ॥

७. यशः पारावारास्तिरयति सुधाम्भोनिधिमहो
महश्चान्द्रं सान्द्रं जगति जयिनो यस्य सुमतेः।
गुणग्रामः स्फीतः कलयति विवृद्धिं कविमुखे
मखेशप्रीतं तं यतिपतिकवीन्द्रं श्रय सखे[३] ॥ १४४ ॥

८. केचित्काञ्चनवाञ्छयात्र बहुधा त्वां भूतलाखण्डलं
सेवन्ते विबुधा मुधाकृतसुधावाचां प्रपञ्चैश्चिरम्।
विद्वद्भूषण दैन्यदूषणकलासिन्धो कवीन्द्र प्रभो
यातस्ते समया जयाधिककविः सोऽहं कपर्देच्छया ॥ १४५ ॥

९. दानेनालिपतकल्पपादपतते पद्मालयानायका-
सक्त प्राक्तनभूरिवैभवजिताराते कृतेज्यानते।
विद्वन्मण्डन दैन्यखण्डन मनाग् वर्षाशनान्नाश्रितं
कर्तुं मामुचितं कवीन्द्र भवतः काश्यां स्वनामोर्जितम् ॥ १४६ ॥

१०. श्रुतिसागरवारपारदृश्वा स्मृतिविश्वासवणिक् धृतेभसम्पत्।
परिषत्प्रियकृत् श्रिया कवीन्द्रः प्रतिपच्चन्द्र इव प्रयातु वृद्धिम् ॥१४७॥

११. पहुवीअलएक्कचक्कवत्ती णिअकित्तीधवलीकिदाजमुत्ती।
समिदाखिलसाहुलोअअत्ती तुह वव्वत्ति स कोवि पक्खवत्ती ॥१४८॥

१. C. °यः २. C. पति° । ३. C. सखि: ४. This verse wanting in C. ५. C. °दाय°

१२. हत्थो दे पहुवी[1]अले सुरवई साही तधा संमदा
दिट्ठी कामदुघा सुधापियवचो रंभामुहाकित्तियो ।
संकप्पो किल कोत्थुभोत्ति हिअअं चंदो वि धण्णंतरी
फंसो होसि कवीन्द साहु सरसो र[2]ण्णा अरोणं तुमं ॥ १४९ ॥

१३. अद्धंगे जस्स गोरी परिलसइ तहा जस्स चंदस्य लेहा[3]
सीसे भालप्पदेसे तिलअदि णअणं जस्स हत्थे कवालं ।
[4]साद्दूलं जस्स चम्मं पियणिअ[5]वेसणं भूसणं जस्स सप्पो
जस्स ठाणं मसाणं वरिसदु हरिसं तुज्झ देओ वसंको ॥ १५० ॥

१४. सच्चं कासि तुमं मिअंकवअणे ? गंधव्वराजस्य मं
णो जाणासि वहुं, कुदो सहअरं उज्झी[6]अ एआइणी ।
सिग्घं जासि ? कइंदणामपहुणो सक्किक्त्तिवारंगणा-
रूवे लुद्धमणोरहो मम वई देसंतरे हिंडइ ॥ १५१ ॥

१५. जोह्लाचंदणअङ्गराअसुहअं चंदं ललाटंतरे
हारं तारकसंघमोत्तिघडिदं घेत्तूण वासं णहो ।
कित्ती दे पहुवीअले पसुवई ठाणं गिरीसं करे
कादुं कंदुअगोलअं णिअवलं प्पब्भारदो खेलदि ॥ १५२ ॥

१६. [7]वर्णी न मी तूज जसा सुवर्णी तैसां करी पूर्ण मला सुवर्णी ।
कर्णो[8]पकर्णी प्रसरो सुवर्णी त्वत्कीर्तिमुक्ताफल जेवि कर्णी ॥ १५३ ॥

१७. अधिगतनृपमानः प्राप्तविद्याभिमान-
स्त्रिदशगुरुसमानः साधितोच्चैः समानः ।
कृतविविधविधानः प्रत्तविद्वद्विधानः
स जयति गुणधानः श्रीकवीन्द्राभिधानः ॥ १५४ ॥

१८. कासारः किमु सर्वतः परिवृतो यो राजहंसैरयं
किं वा पद्मवनं नृलोचनचलद्रोलम्बरोलम्बरम् ।
किं वा जीवनमस्ति सज्जनमनोमीनावनं पावनं
श्रीपृथ्वीन्द्रसमुद्रसान्द्रसुखकृच्चन्द्रः कवीन्द्रः किल ॥ १५५ ॥

**पट्टवर्धनमहादेवभट्टाना**मष्टादश पद्यानि ॥

---

१. C. वहुली° २. A. रस्मा C. रणा. ३. A. B. लेहा. ४. A. सदूलं B सद्दूलं. ५. A. °निअ° ६. C. ओजूअ ७. A. वणी. ८. B. कर्णा°.

१. स्वस्ति श्रीनृपसाहजाहविलसच्छ्रीराजधानीस्थिति-
विद्योतद्युतिराजराजिमुकुटालङ्कारहीराङ्कुरः ।
विख्यातो जगति प्रतापिचरितः श्रीमान्कवीन्द्रो यतिः
संजागर्ति पतिः सतामविरतं विश्वोपकारव्रते ॥ १५६ ॥

२. सुरेन्द्रोऽपि निद्रादरिद्रो यतस्तं श्रितो यं नरेन्द्रं[१] कवीन्द्रो यतीन्द्रः ।
तमन्ये ह मन्ये[२] परार्थादिहार्थं समर्थं पुमर्थं तमेवाहुरार्याः ॥ १५७ ॥[३]

३. तस्यैते चरणारविन्दयुगलं ध्यायन्ति सर्वे द्विजा
युष्मत्स्वीकृतपद्मनाभचरणच्छायामुपाध्यासिताः ।
किं चान्येऽप्यधिकारिणोऽपि भवतामाज्ञामुपास्यान्वहं
वर्तन्तेऽवनिनाथ पत्रमितरच्चागामि कृत्वान्ततः ॥ १५८ ॥

४. कान्तो मुख्य[४]प्रकारस्तदनु चकास्त्यत्र सर्वार्थदायी
शान्ता[५]कारः सवर्णेष्वपि न विकुरुते नाप्यजन्यैः सवर्णः ।
काशीतोऽपि प्रकाशा जयति गुणवदाद्यौष्ठ्यमूर्धन्यवर्णा
मोच्या दुष्टावरोधादियमपि नगरी सार्वभौमाङ्कितेन ॥ १५९ ॥

५. श्रीमद्धन्यकवीन्द्रसंयुतसरस्वत्या गुणाम्भोनिधे-
र्नीत्वा साधुगुणामृतं परकृति श्रीपद्मनाभाश्रमैः ।
यत्प्रत्यर्पितमौषदाशु सुजनादित्येषु तेन क्षणा-
त्क्षीनं दुष्टसुराद्विषाद्भिरिह किं चित्रं विचित्रात्मनाम् ॥ १६० ॥

६. कर्मन्दिनामिव कलौ कुजनार्दिताना-
मद्वैतभावमनसां प्रतिपालनाय ।
दत्तो नु शङ्कर इतो विदधेऽवतारं
नाम्ना कवीन्द्र इति विश्वजनोपकारी ॥ १६१ ॥

७. यं पद्मनाभोऽपि धियाधिशेते[६]
सरस्वती न क्षणमप्युदास्ते ।
पुष्णासि भो मामपि वाडवं चे-
त्कवीन्द्र सिन्धुर्भवितासि किं न ॥ १६२ ॥

८. उच्चैर्दशावानपि यावदर्थं
स्नेहेन भर्तुः स्वशरावकस्य ।

---

१. B. यन्नरेन्द्रं   २. B. मत्यं   ३. Wanting in A.   ४. A. मुख्यः
५. C. शीता°   ६. BC. °शिशेते.

न साधयेच्चेत्प्रतिपाद्यमानं
कवीन्द्रदीपो वद कोऽन्य ईदृक् ॥ १६३ ॥

९.

श्रीं न दुग्धाब्धें
त्वयि भवति समी
[1]ध्यन्तरीपे सको
अवनिपकुलदी
पे
अरिभिरतिदुरा
यद्विदीपे द्विपो
द्युतिविरहकृतत्पू
वारिधौ सकं

॥१६४॥

१०.

| | | |
|---|---|---|
| ली | नायदङ्घ्रिभजनादपि पङ्कमा | ला |
| म्यो हरंस्तम उद्गीति किमंशुमा | अत्र चतुर्षु कोणेषु स्थितैरक्षरैः कवि-नाम स्पष्टं भवति ॥ | [2]वर्ण्यमीदृगनघं यद्वंशरो |
| र | न्यो दिशाममृतपूरितकर्णपू | ष |

॥ १६५ ॥

१. C. द्योतटीन्योमकू. २. C. ॰मेतदनघं.

११.

नौमि भूयः कवीं
जगति विहितम्
रापयन्तं यतीं
हृदयलसदुपें
द्रं
अमरतमुरगें
सच्चकोरैकचं
परकृतिषु विनि
वन्द्यवार्तांक्षितीं

॥१६६॥

१२. प्रकाशापुरीवासिलीलाधरेण ध्रुवं भट्टविश्वेश्वरस्यात्मजेन ॥
दलं पद्मनाभाश्रमस्याज्ञयेदं व्यजिज्ञापि चञ्चत्कवीन्द्राम्बुजेषु ॥ १६७ ॥

दाक्षिणात्यलीलाधरभट्टस्यैतानि द्वादश पद्यानि ॥

१. याति द्राक्स्थिरतां कवीन्द्र भगवन् त्रैलोक्यमाक्रामति
स्वैरं सर्पति सर्वतः प्रतिदिशं प्रोत्तुङ्गताम‍ञ्चति ।
भूमीन्दो हृदयङ्गमं प्रणयिनां युष्मद्यशोमण्डलं
पृथ्वीवत्परिवेषवत्पवनवत्प्रासादवत्प्राणवत् ॥ १६८ ॥

मैथिलबदरीनाथोपाध्यायानाम् ॥

१. येन श्रीसाहिजाहाँ नरपतितिलकः स्वस्य वश्यः कृतोऽभूत्
किं चावश्यं प्रपन्नः पुनरपि विहितः शाहिदाराशकोहः ।
काशीतीर्थप्रयागप्रतिजनितकरग्राहमोक्षैकहेतुः
सोऽयं श्रीमान् कवीन्द्रो जयति कविगुरुस्तीर्थराजाधिराजः॥१६९॥

२. काश्मीरैराककारस्करदरदखुरासानहब्शानजाता[1,2]
वङ्गारब्बाः फिरङ्गास्तुरुकशकवदक्शानमुल्तानवल्काः ।[3]
खान्धाराः काबिलेन्द्रा अपि धरणिभृतस्ते मगा रूमशामाः[4]
श्रीमच्छ्रीसाहिजाहानरपतिसदसि त्वां कवीन्द्र स्तुवन्ति ॥१७०॥

३. त्वद्वक्त्रोत्थकवित्वशीतकिरणत्रासाकुलान्तः पुटं
खिद्यद्वाग्भ्रमरीविलासमलसं दोषान्धकारावृतम् ।
मद्वक्त्राम्बुरुहं विकासयतु सद्वाणीलसत्सौरभं[5]
श्रीवादीन्द्रकवीन्द्र तावकगुणप्रद्योतनोषःप्रभा ॥ १७१ ॥

हीरारामकवेस्त्रीणि ॥

१. दाने राज्ये गवि क्षान्तौ श्रीकवीन्द्रोऽस्तु सर्वदा ।
कर्ण-राम–गुरू-र्वीभिः समः सूर्येण तेजसा ॥ १७२ ॥

२. त्वं बुद्ध्या गुरुरंशुभिः शशधरः सूर्यश्च तेजोभरै-
रग्निस्त्वं च वरप्रतापनिवहैर्वायुर्बलेनासि किम् ।
श्रीदस्त्वं कमलासमर्पणतया विद्यानिधान प्रभो
गाम्भीर्येण च नीरधिश्च मदनो रूपेण विद्वद्विभो ॥ १७३ ॥

गणेशभट्टानां द्वयम् ॥

१. चतुर्वेदीविदां श्रेष्ठः षडङ्गाध्यायिनामपि ।
शास्ति शास्त्राणि सर्वाणि साहित्यसहितानि च ॥ १७४ ॥

२. अष्टादश पुराणानि तथा सर्वा अपि स्मृतीः ।
योगवाशिष्ठविज्ज्येष्ठः श्रीकवीन्द्रसरस्वती ॥ १७५ ॥

३. ब्राह्मणानां क्षत्रियाणां वैश्यानां शूद्रजन्मनाम्
ब्रह्मचारिगृहस्थानां वानप्रस्थाभिधाजुषाम् ॥ १७६ ॥

४. दण्डिनामवधूतानां सर्वकाशीनिवासिनाम् ।
पण्डितापण्डितानां च परमानन्ददायकः ॥ १७७ ॥

५. ब्रह्मेन्द्रपूर्णेन्द्रयतीन्द्रवृन्दमुख्यैरशेषैराभनन्द्यमानः
यतिः कवीन्द्रोऽस्ति विभासमानः सद्धर्मपुञ्जेन विराजमानः ॥१७८॥

---

१. BC. कश्मी°. २. B. गुराशान, A. खुराशान. ३. Emendation. । ABC. °स्तबक°. ४. AB. °सामाः ५. AB. विकाशयतु.

६. दयाशीलसन्तोषवैराग्यधर्मक्षमादानविज्ञानसिन्धूपमानः[1]।
परानन्दसन्दोहकन्दं ददानो महीमण्डलेऽसौ कवीन्द्राभिधानः॥१७९॥
७. अमुना कवीन्द्रनाम्ना श्रीब्रह्मेन्द्रस्वाम्यनुगृहीतेन।
काशीप्रयागकरयोर्मोको लोकोत्तरोऽकारि॥ १८०॥
८. यस्य वासेन सर्वस्य वासो भवति निर्भयम्।
वेदितव्या महीन्द्रेण सर्वेषामत्र संमतिः॥ १८१॥

सकलवाराणसीनिवासिविशिष्टशिष्टकृतं कवीन्द्राष्टकमिदम्॥

एष प्रवाहः करुणारसस्य १, सन्तरणसेतुः संसारसिन्धोः २, आधारः क्षमाम्भसाम् ३, परशुस्तृष्णालतागहनस्य ४, सागरः सन्तोषामृतस्य ५, उपदेष्टा सिद्धिमार्गस्य ६, अस्तगिरिरसद्[2]गृहस्य ७, मूलमुपशमतरोः ८, नाभिः प्रज्ञाचक्रस्य ९, स्थितिवंशो धर्मध्वजस्य १०, निलयः कलानाम् ११, तीर्थं सर्वविद्यावताराणाम् १२, कुलभवनमाचाराणाम् १३, आयतनं मङ्गलानाम् १४, दर्शकः सत्पथानाम् १५, उत्पत्तिः साधुतायाः १६, नेमिरुत्साहचक्रस्य १७, आश्रयः सत्यस्य १८, प्रतिपक्षः कलिकालस्य १९, कोशस्तपसः २०, सखा सत्यस्य २१, क्षेत्रमार्जवस्य २२, प्रभवः पुण्यसञ्चयस्य २३, अदत्तावकाशो मत्सरस्य २४, दिवसकरो मोहान्धकारस्य २५, अरातिर्विपत्तेः २६, अस्थानं परिभूतेः २७, अननुकूलोऽभिमानस्य २८, असंमतो दैन्यस्य २९, अनायत्तो रोषस्य ३०, अविषयो विषयाणाम् ३१, अनभिमुखः सुखानाम् ३२, निकषोपलः शास्त्ररत्नानाम् ३३, श्रीकवीन्द्रो महेन्द्र इव चिरं जीवतु ३४.

मौनिविश्वेश्वरभट्टानामेताश्चतुस्त्रिंशच्चूर्णिकाः[3]॥

येनामोचि महीन्द्रदुस्सहकरग्राहाद्धि पुण्यश्रियो
वेणीव प्रचुरप्रमोदनकरी वेणी कलिद्रोहिणा।
तीर्णः शास्त्रसरित्पतिर्धिषणया नीता परं[4] गौरवं
श्रीमद्वीरकवीन्द्रसाधुपदवी धन्यो हि तादृग्जनः॥ १८२॥

श्रीमहीपत्युपाध्यायानाम्॥

स्वस्ति श्रीमत्प्रचण्डपाखण्डशङ्कासुरापहृत[5]पापपाथोधिमज्जत्त्रयीधर्मसमुद्धारमत्स्यावतारेषु १ सुविरूढतर्कभावनावशंवदाक्षपाददर्शनविख्यातनिर्वचन-

१. A B यमानः २. Wanting in A ३. A. °त्रय° । Numbers २६-३० wanting in B. ४. C. पदं. ५. C. °कृत.°

पाटवेषु २ विशदवैशेषिकावेशप्रकाशिताशेषक्षणसंख्याकलनविषमकार्योत्पत्तिविवेकेषु ३ भगतपूज्यपादभाष्याकृतसम्भूतबादरायणीयन्यायनिदर्शनविवृतबृहदारण्यककठवल्लीपैप्पलादकौषीतकिच्छांदोग्याद्युपनिषद्रहस्येषु ४ दृढतराभ्यासस्फुरज्जैमिनीयविविक्ताशेषमन्त्रब्राह्मणेषु ५ निगमनिरुक्तव्याकरणशिक्षादितत्वावगाहनसफलस्वाध्यायेषु ६ वैदिकवासनापरिपूतहृदयोद्भूततर्कभावितसमस्तमानवीयादिधर्मशास्त्रेषु ७ पुराणपरिच्छेदप्रसृमरप्रतिभेषु परितः प्रसृत्वरसारस्वतप्रतिभानुबन्धबंधुराध्यापनसुभंगभावुकाध्ययनेषु ९ गर्गादिमुनिवरयज्ञशास्त्रशालिदैवज्ञमनोज्ञव्यवहारसांवत्सरजातकासिद्धान्तपाटीबीजव्याख्यानकौशलेषु १० वात्स्यायनादिशास्त्रसन्देहच्छेदिषु ११ गङ्गाजलप्राञ्जलपातञ्जलपरिशीलनानलसेषु १२ सांख्यसन्तोषितसंख्यावत्सु १३ परमाप्तेषु श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥ १४ ॥

शिवदत्तमिश्राणामेताश्चतुर्दश प्रशस्त्यानुपूर्व्यः ॥

॥स्वस्ति श्रीमदनवरतपरोपकारनिरतदिगन्तविश्रान्तकीर्त्तिकर्पूरपूरसुरभीकृतत्रिलोकेषु १ सकलकरमोचकेत्यादिविरुदावलीराजमानेषु २ श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥

चक्रपाणिपण्डितानाम् ॥

१. या कालिदासादिमहाकवीनां वाणी विलासाज्जरती बभूव ।
सैवेयमानन्दभरेण वाणी कवीन्द्रवक्त्रे नवतामुपैति ॥ १८३ ॥

कविशेखरस्य ॥

१. या विद्या प्रौढविद्याविशदगुणयुता सर्वदा सर्वदात्री
विख्याता या त्रिलोक्यामभिमतमतयः सर्वदा यां स्तुवन्ति ।
सा विद्या प्रौढरूपा विलसति हृदये यस्य नित्यं समन्ता-
त्सोऽयं श्रीमत्कवीन्द्रो जगति विजयते भूसुरेन्द्रैकवन्द्यः ॥१८४॥

२. यद्दानानेकरूपाः सपदि विलिखितक्ष्मातलन्यस्तचित्ताः
प्राप्तानेकाधिमार्गाः सुविहितविहिताचारसन्त्यक्तमार्गाः ।
अस्तीभूताः समस्ताः प्रबलबलभुजो भूभुजो यन्निरस्ताः
सोऽयं जाग्रत्प्रभावो जगति विजयते श्रीकवीन्द्रो यतीन्द्रः ॥१८५॥

१. A. °सकल°. २. C. °च्छेदप्रशस्तामरप्र°. ३. A. °सुभगं°. ४. C. °की°.

३. सदाचारचारी सदा श्रीकवीन्द्रो
विचारी सतां सद्व्रतानां गुणानाम्।
समुद्योततां भास्वदुग्रप्रभाव-
स्वभावोऽखिलानां जनानां विभूत्यै ॥ १८६ ॥

४. सुरेन्द्रैः स्तुतो भूसुरेन्द्रैः प्रगीतः
सदा देवपूजारतिव्याप्रियुक्तः।
भृशं सच्चिदानन्दरूपः कवीन्द्रो
यतीन्द्रो विभातीति लोके महेन्द्रः ॥ १८७ ॥[1]

भूधरपाठकानां चत्वारि ॥

१. आसत्तिमाधुर्यविभङ्गिभावैराकाङ्क्षया योग्यतया प्रसन्ना।
कवीन्द्रवाणीतरुणीदृगेषा केषां न चेतस्तरलीकरोति ॥ १८८ ॥

रघुनाथोपाध्यायानाम् ॥

त्वं विद्याम्बुधिलंघनैकनिरतः सा सप्तवारां निधीन्
धन्या तीर्णवती तनोषि विदुषां त्वं मानसं निर्मलम्।
सा संसारमखण्डितं वितनुते चन्द्रोज्ज्वलं सर्वदा
तज्जानीहि कवीन्द्रधीर भवतः कीर्त्या भवान्निर्जितः ॥ १८९ ॥

२. नूनं शास्त्रसमुद्रोऽयं भवता निर्मलीकृतः।
कवीन्द्र त्वद्यशःसोमोऽपङ्को यस्मात्ततोऽभवत् ॥ १९० ॥

पुनरपि महीपत्युपाध्यायानां पद्यद्वयम् ॥

१. नीचीकृत्य मुकुन्दभक्तिनिचयैः षड्वैष्णवाहंकृतिं[2]
श्रीमद्धन्यकवीन्द्र दानविधिना निर्जित्य भूमीभुजः।
पादैकेन धरावलंबनविधौ खिन्नस्य मन्यामहे
धर्मस्येह करावलंबलगुडीभूतो भवान् वर्तते ॥ १९१ ॥

कविशेखरस्य ॥

१. कलौ युगे किलायाते धर्मोध्वंस[3]ध्रुवं दधौ[4]।
कवीन्द्ररूपो भगवानाविर्भूतः स्वयं विभुः ॥ १९२ ॥

---

१. Verses १८४-८७ are wanting in A, but found in C. २. C. °तीं. ३. C. °सं. ४. C. दधे.

इन्द्राधिकान् द्विजांश्चक्रे श्रीकवीन्द्रः कलौ किल ।
काश्यादिसर्वतीर्थेषु साक्षान्मोक्षं न्यचीक्षिपत् ॥ १९३ ॥

लक्ष्मणमहापात्रस्यैतौ ॥

१. त्वं बुद्ध्या धिषणोऽशुभिः शशधरो भानुः प्रभानां भरै-
र्वह्निस्त्वं च नवप्रतापनिवहैर्वायुर्बलेनासि किम् ।
ईशश्रीन्द्रकवीन्द्रधन्यधनदो विद्यानिधान प्रभो
गांभीर्येण किमम्भसां निधिरहो रूपेण किं दर्पकः ॥ १९४ ॥

कस्यापि ॥

॥ स्वस्ति श्रीमन्निखिलविद्वन्मानसमानसराजहंसेषु १ सत्कविबुधोत्तंसेषु २ सच्चिदंशेषु ३ स्मृतिनिहतदुष्टकंसेषु ४ वृषस्फुरदंशेषु ५ कविताकादम्बरीपानसमयविहितचारुशास्त्रविचारपललोपदंशेषु ६ निरस्तसमस्तदुर्हृदयदंशेषु ७ समुल्लसत्सद्वंशेषु ८ विगमितजगदुदरगतापभ्रंशेषु ९ विहितपातकजातविस्रंसेषु १० सुकृतिसुकृतप्रशंसेषु ११ सौन्दर्यविनिर्जितपञ्चसायकेषु १२ ॥ सकलशर्मनिर्मायकेषु १३ दीनावलिदीनारवृन्ददायकेषु १४ प्रसादितविनायकेषु १५ कलाकलापसमुल्लासितजगन्नायकेषु १६ पृथ्वीपावनपावकेषु १७ साधुसिद्धिसमाधायकेषु १८ समुञ्चचातुर्यचारित्र्यसंचायकेषु १९ गिरीशगोविंदगुणगणगायकेषु २० सकलशास्त्रसिद्धान्तनिकायनिष्वषकेषु(?) २१ सुकृतसुकृतनिकरनिःकल्मषीकृतकायकेषु २२ असत्समभिव्याहारविहायकेषु २३ विचित्रचरित्रेषु २४ सर्वंसहासहित्रेषु २५ खलद्रुममूलसमूलोन्मूलनखनित्रेषु २६ त्रिपथगापयःपूरपवित्रेषु २७ सद्यः समुद्यदनवद्यविद्यासुधाधारासवित्रेषु २८ धरण्यधन्यमूर्द्धन्यदुर्द्धीधोरणीपवित्रेषु २९ सन्मित्रेषु ३० महार्घ्यंबुधिपुण्यक्रियासमुत्तरणतरीविधृतसमुल्लसत्कौशलसदरित्रेषु ३१ विद्यावदनरित्रेषु ३२ प्रभानुकृतप्रचण्डमित्रेषु ३३ कपटलंपटलोकलौल्यलवित्रेषु ३४ श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥

श्रीस्वामिशिष्याणाम् ॥

१. C. °श्रीश. २. C. drops °मानस°. ३. C. स्मृतानिहतकंसेषु. ४. A °पायकेषु. ५. Nos. 18–21 Wanting in C. ६. Shall we read °निश्चायकेषु? ७. सद्यः Wanting in A. ८. C. °रिपवित्रेषु. ९. Nos. 32–33 Wanting in C.

॥ श्रीमत्परमहंसपरिव्राजकत्वाद्यनेककल्याणगुण[1]निधानेषु राजमण्डली-गीयमान[2]चरणसरोरुहद्वंद्वेषु १ अतिविशदयशःशशधरकरनिकरविकासप्रकाशितसमस्तादिगन्तप्रदेशेषु २ पदवाक्यप्रमाणज्ञा[3]चार्यधौरेयसर्वतंत्रस्वतंत्रमुकुटमाणिक्यायितेषु ३ अनवरतवेदान्तोपनिषद्रसास्वादितात्मवैभवेषु ४ श्रीपादवर्य-श्रीकवीन्द्राचार्यसरस्वतीपूज्यचरणेषु ५॥

तिलभाण्डेश्वरस्य ॥

॥ स्वस्ति श्रीमत्समस्तगुणरत्नाकरेषु १ सर्वतीर्थशिरोमणिश्रीवाराणसी-तीर्थराजप्रभृतितीर्थनिचयकरमोचनसमुद्भूतपुण्यराशिपरंपराविर्भूतविशदयशः–स्तोमविशदीकृतभूमंडलेषु २ सकलावनीतलवास्तव्याशेषसंख्यावत्संस्तूयमानसकलविद्याकलापविजितविमतवा[4]दिनिवहेषु ३ सार्वभौमप्र[5]भृतिसकलमही-पालसंतो[6]षावहसकलकलाविराजमानेषु ४ महोदारमहाशयपरमाप्तश्रीसर्वविद्या-निधानकवीन्द्राचार्यसरस्वतीप्रभुवरेषु ५ ॥

ब्रह्मेन्द्रसरस्वतीनाम् ॥

॥ स्वस्ति श्रीमच्चतुरुदधिवलयिताखिलमहीतलनिवसद्बुधवरनिरतिशय-प्रीतिकरगद्यपद्यरचनापराजितकालिदासादिकविवरेषु १ व्यासगौतमपराशर-जैमिनिपतञ्जलिप्रभृतिसकलप्रबन्धकर्तृसमष्ट्यवतारेषु २ अश्रान्ताशेषार्थविश्राणन-परितृप्तार्थिसार्थविस्मारितपारिजातादिदातृनिवहेषु ३ सार्वभौमप्रभृतिसकल-महीपालसंततसन्तोषावहसकलकलाविराजमानेषु ४ महोदारमहाशयपरमाप्त-श्रीसर्वविद्यानिधान[7]कवीन्द्राचार्यसरस्वतीपरिव्राजकपरिवृढेषु ॥ ५ ॥

ब्रह्मेन्द्रस्वामिनाम् ॥

१. कालोऽयं मृगयुः करालदशनः श्वादम्भ एव च्छलै-
रत्यन्तद्रढिमान्विता विरचिता तेनैव यद्वागुरा ।
तद्धीरेन्द्रकवीन्द्र धर्महरिणः स्यादक्षतो न क्वचि-
न्नोचेद्रक्षणमातनोषि गहनीभूत्वा गुणैः शाश्वतम् ॥ १९५ ॥

नारायणचतुर्वेदस्य ॥

---

१. C °गुणगणाग्रपुण्यराजमानमान्यराजमण्डली°  २. C. adds °पूज्यमान° before °चरण°  ३. C. °ज्ञाना°  ४. °वादि° Wanting in C.  ५. C. °प्रकृति°. ६. A. °संतोषासकल—वि°.  ७. A om. °सर्वविद्यानिधान°.

१. अम्भोऽधितनयाम्भोजवासदम्भोपशान्तये ।
कवीन्द्रवदनाम्भोजे वसति स्म सरस्वती ॥ १९६ ॥

२. न्यायज्ञोऽपि न संशयं छलमपि प्रायो न वेत्सि क्वचित्
मीमांसाविहितादरोऽपि न परं जानासि मन्युक्रमम् ।
वेदान्तैकविचारकोऽपि मनुषे नो निर्गुणं सर्वतो
दण्डं मोचयसीह दण्डभृदपि श्रीमत्कवीन्द्र प्रभो ॥ १९७ ॥

तैलङ्गवैकुण्ठभट्टानामेतौ

१. कल्पान्तःकरण[1]प्रकाशकरगङ्गात्ययाचितश्रीपते-
र्ज्ञानाकारनिरूपणप्रकरणाकर्ण्यस्य पूर्णाकृतेः ।
स्वाज्ञानाभयदानुभूतिविबुधारब्धप्रसादोन्मुख-
क्रीडादेववरस्य दर्शनमिदं भूत्यै कवीन्द्रस्य ते ॥ १९८ ॥
सदलंकारविख्यातं सदागतिजनोदितम् ।
रससेतुपदानन्दं कवीन्द्रं राघवं भजे ॥ १९९ ॥

भानभट्टानामेतौ

क्वचिद्बुद्धिगर्वः क्वचिच्छुद्धिगर्वः क्वचिच्छ्रीविगर्वः क्वचिद्बन्धुगर्वः ।
ममेत्थं मनोवृत्तयो गर्वगर्ते भ्रमित्वा महान्तं कवीन्द्रं भजन्ते[2] ॥२००॥

कस्यापि

१. दीनद्विजातिदारुणदुःखावलिदारुदारणे दृप्ता ।
वाणी सरसकृपाणी विलसति वाणी कवीन्द्रस्य ॥ २०१ ॥

व्रजभूषणकवेः ॥

१. आन्वीक्षिक्यच्छरत्नावलिविलित(विहित?)परीक्षाक्षमस्त्वं क्षमायां
मीमांसारण्यपञ्चाननफणिभणिताम्भोधिकुम्भोद्भवश्रीः ।
सांख्यप्रख्यातपातञ्जलकुमुदवनीचन्द्र वैशेषिकज्ञ
स्वाध्यायाध्यापकाद्य द्युमणिरिव समुद्द्योतसे श्रीकवीन्द्र ॥२०२॥

२. भट्टो भट्टनये गुरुर्गुरुनये श्रीशङ्करः शाङ्करे
काणादे च कणाद एव मनुतामाप्तो मते मानवे ।
साहित्ये भरतः पतञ्जलिमुनिः पातञ्जले गौतम-
स्तर्के व्याकरणे च पाणिनिरसौ श्रीमत्कवीन्द्रः कृती ॥ २०३ ॥

---

१. B. °र्णं°.　२. C. भजेहम् । Verses 198–200 wanting in B.

३. काणादे कणभुक् पतञ्जलिमुनिः पातञ्जले प्राञ्जले
सांख्ये संख्यविशेषभाजि कपिलो व्याख्यातृमुख्याधिपः।
श्रीव्यासोऽप्यथ चैष जैमिनिमुनिर्वेदान्तमीमांसयो-
स्तर्के गौतम एव केवलमसौ श्रीमत्कवीन्द्रो यतिः॥ २०४॥

**केषांचित्** पद्यत्रयम्॥

१. नित्यानन्दतिदाभदर्शनदयादेवस्य भद्रक्रते[1]
क्षुद्राहंकृतिमुद्रणप्रमितये प्रज्ञानमुद्रादरन्।
रूपं यस्य निरूपमानकवनोपाख्यानमुख्याकृते-
रेकाद्य प्रतिपाद्यसाधनमनानन्दैः कवीन्द्रप्रभो (?)॥ २०५॥

**भानभट्टानाम्।**

१. श्रीकवीन्द्रयशो भाति सर्वोपरि निरन्तरम्।
दानशक्त्या हरेर्भक्त्या धर्मशक्त्या च केवलम्॥ २०६॥

**गङ्गाराममिश्राणाम्॥**

॥ स्वस्ति श्रीमत्संजातस्वसंवेद्यापरोक्षनिरतिशयानन्दसाक्षात्कारान् १ अगणितगुणग्रामाभिरामान् २ वचनरचनाचमत्काराविष्कारनिराकृतप्रखरमुखरवादिवृन्दान् ३ अनवद्यगद्यपद्याद्यनेकविद्याविनोदितसकलसहृदयहृदयान् ४ पाखण्डपलाल[2]खण्डाच्छादितवेदशेवधिप्रकाशनप्रज्वलितशास्त्रज्वलनज्वालान् ५ यज्ञपुरुषोपासनपरायणानपि नयज्ञपुरुषोपासनपरायणान् ६ जगत्सु समदर्शनसेवनप्रसितानथ[3] समदर्शनसेवनप्रासितान् ७ हितोपदेशकुशलानपि विहितोपदेशकुशलान् ८ सज्जनासज्जनानुग्रहनिग्रहसंगृहीतधर्मसङ्ग्रहान् ९ दिगङ्गनावतंसीकृतयशःकुसुमोपचयान् १० करीन्द्रमोक्षवन्महाकरविमोचनपरिगृहीतश्रीभगवत्स्वरूपान् ११ श्रीसार्वभौमसंमानितान् १२ श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीश्रीपादान् १३ वाराणसीवासिनः संन्यासिपण्डितमहाजनप्रभृतयः समस्तजना यथोचितकलिताञ्जलिपुटा अष्टाङ्गीस्पृष्टभूमयश्चाशीराशीन्प्रणामांश्च निवेदयन्तो विज्ञापयन्ति॥ १४॥

१. स्वयमिह सुदृशां सभासु केचिन्निजपुरुषार्थविधिं नु वर्णयन्तु।
करटिकपाटपाटनेन प्रकटितपाटव एक एव सिंहः॥ २०७॥

---

1. Emend. भद्राकृतेः। 2. B. पाखण्डादिपलाल; 3. C. प्रमितान् for प्रसितान्; C. omits प्रसितानथसमदर्शनसेवन (haplography);

२. तीक्ष्णतुण्डाः श्लक्ष्णदण्डा रागिणः पक्षपातिनः ।
त्वां विनाऽन्ये तु यतयो विशिखा एव केवलम् ॥ २०८ ॥

**काशीस्थसंन्यासि[1]पण्डितानां** पत्रमदः ॥

॥ स्वस्ति श्रीपुरुषोत्तमप्रभाप्रभावोज्वलबलवदाखण्डलकुलमण्डनपाण्डवदोर्द्दण्डखाण्डवदाहताण्डवगाण्डीवातिचण्डकोदण्डा[2]कुण्डकुण्डमण्डितभुजदण्डमण्डलाधीश[3]मौलिमण्डनरुचिररत्नचयकिरणानुलंघितप्रभाप्रवाहमणिनिवहोज्वलचरणपीठमहीमहेन्द्रोदितमहेन्द्रगुरुगौरवेषु १ न्यायादिनिखिलशास्त्रावगमानुपहततत्त्वावगमविदिताखिलवेदान्तोदन्तप्रशान्तचित्तेषु २ नवरस[4]कलितकोमलपदन्यासोत्तमानुबन्धविशकलित[5]कालिदासकवित्वललिततत्वेषु[6] ३ दिननाथेष्विवोदयाभिभूतदोषाकरेषु ४ न कैरवमानितेषु ५ द्विजराजेष्विव स्वकरासङ्गविनिमीलितपङ्कजकुलेषु ६ तीर्थराजेष्विव दृष्टादृष्टाभिलाषपरिपूरकेषु ७ ब्रह्मस्वरूपेष्विव ध्यानोपनीतनिखिलानन्देषु ८ श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीजगदुज्वलचरितेषु ९ ॥

**जगन्नाथपञ्चाननभट्टाचार्याणां** पत्रमदः

१. टीकाकारोऽपि नारोहति तव तुलनां खण्डनो मण्डनो वा
गङ्गेशो बुद्धिलेशोपहतमतिरणुर्वर्द्धमानोर्द्धमानः ।
देवाचार्यो विचार्यो भवति भुवि पुनः शेषनागोऽपि तादृक्
धीरश्रीमत्कवीन्द्र त्रिभुवनवलये कः समस्ते समस्ते ॥ २०९ ॥

२. यवनकरग्रहदुःखात् पुररिपुवनिता विमोचिता काशी ।
सुकृतेन तेन मन्ये कवीन्द्र भवतः समः कोऽस्ति ॥ २१० ॥

**मैथिलकायस्थस्य** ॥

१. सुधा भवति सा मुधा मधुकथा वृथा जायते
मदालसमरालिनीरवमदोऽपि मन्दोद्यमः ।

---

१. A and C. omit °संन्यासि; २. B °ण्डकाण्डकुण्डलन°. ३. B °भुजदण्डली° ४. AC add the following before नवरसः– " पुरुहूतपुरोहितोत्तमविपक्षलक्षणविक्षोभशिष्यसन्तानमहोपाध्यायाध्यापन ( C पित) कौशल ५. C °विकलित° ६. AC °ललिततत्त्वकवत्वेषु for °ललित°.

रसालफलजो रसो विफलतां तदालम्बते
कवीन्द्र भवतो यदा वचनमेतदाकर्ण्यते ॥ २११ ॥

गुर्जरस्य कस्यचित् ॥

१. वृथा मधुकथाप्रथा प्रवितथा तथा गोस्तनी
तरुण्यधरमाधुरी भवति साधुरीतिर्न हि ।
सुधापि वसुधातले भवति सा मुधा भो[1] बुधाः
कवीन्द्रकविता यदा कविवरैः समाकर्ण्यते ॥ २१२ ॥

स्वामिन एव ॥

१. वेदान्ते व्यासरूपं विमलरसमये भार्गवं काव्यकल्पे
जल्पे[2]ऽनल्पेऽक्षपादं परमतदलनायालमीशानसूनुम् ।
आशीर्वादे वासिष्ठं यतिवरममितध्वान्तनिध्वंसभानुं
दिल्लीशानन्दसानुं पशुपतिपुरपं श्रीकवीन्द्रं नमामि ॥ २१३ ॥
२. गृहे गृहे वै गुरवोऽत्र सन्ति पदे पदे गोत्रभिदो भवन्ति ।
कवीन्द्र साम्यं दिव एतदेव भूमण्डले कल्पतरुस्त्वमेव ॥ २१४ ॥
३. यद्रोमकूपेषु हि सावकाशं सहस्रशोऽण्डानि परिभ्रमन्ति ।
त्वच्चित्तदेशं स समाश्रितोऽस्ति कवीन्द्र कस्ते समतामुपैति ॥२१५॥
४. दिक्कालयोर्व्योम्नि तथात्मपुञ्जे यद्वैभवं वाचनिकं तदस्ति ।
प्रत्यक्षगम्यं तु भवत्प्रभुत्वं कवीन्द्र ! दिल्लीपतिपूज्यपाद ! ॥२१६॥
५. यत्तत्वमस्याद्युपदेशवाक्यं ब्रह्माहमस्मि व्यवसायवाक्च ।
लक्ष्यं तयोरस्ति यदात्मतत्त्वं तत्त्वं कवीन्द्रेति वयं प्रतीमः ॥२१७॥
६. अज्ञानतश्चावरणं त्वभानं ततश्च विक्षेप उदेति पुंसाम् ।
स्वरूपभासादपबोधनाशो यश्चापवादः स भवान् कवीन्द्र ॥ २१८ ॥
७. कवीन्द्र विज्ञप्तिरियं मदीया विश्वोपकाराय हि वाक्त्वदीया ।
विश्वोपकारैकनिधे यतीन्द्र क्वचित्क्वचिन्मामपि संस्मर त्वम् ॥२१९॥

दयालुमिश्राणां सप्त पद्यानि

स्वस्ति समस्तसामन्तसीमन्तिनीसिन्दूरपूरास्ताचलनिष्कृपकृपाणधारा-
वलुप्तदृप्तमेदिनीपतिमण्डलीमण्डितचण्डीशमूर्त्तिमहीमण्डलबलवदखिलखलै[3]दलन-

1. C नो. 2. C transposes नल्पे and जल्पे. 3. AC om. °खल°.

३ क.

लीला[1]खण्डलनिखिलधरातलाखण्डलश्रीमच्चक्रवर्त्तिपरोपकारमात्रनिदानसेवनसावधानेषु १ अनवरतप्रतन्यमानमहादानसन्तानसन्तोषितोर्वीसुपर्वप्रणीताशीर्वादमोदमानमानसयशोराजहंसोल्लासलीलानिवासमानसामन्दमन्दरगिरिपै[3]रिक्षुभितक्षीराब्धिमध्योल्लसल्लो[4]लकल्लोलविमलसूक्ति[5]मुक्ताफलकलापालंकृतकण्ठनालानेककलाविलासोपहसितासितकमलकलानिधिनिरवद्यसद्विद्यानवद्याश्रयपयोराशिषु विहितकरमोचनेष्वपि दत्तसमस्तजनकरावलम्बेषु २ क्षीरोदतनयासूयापरमुखकमलनिवसत्सरस्वतीषु ३ श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥ ४ ॥

विश्वे[6]श्वरभट्टानाम्

स्वस्ति श्रीमत्समस्तप्रशस्तिरत्नावलीनदराजपूरेषु १ परितः प्रसृत्वरसारस्वतप्रतिभानुबन्धकोरकितकविताकलावतीकर्णपूरकमलमकरन्दसन्दोहसूक्तिषु २ शारदशर्वरीदयितगर्वसर्वंकषकीर्त्तिकल्लोलिनीपूरप्रक्षालितानिखिलाशामत्तकाशिनीवदनमण्डलेषु ३ स्वमात्रवृत्तिधर्मावच्छिन्नयावद्दोषाभावव्यक्तिकूटाधिकरणताकेषु ४ यावद्गुणाधिकरणतावच्छेदकस्वमात्रवृत्तिधर्मेषु ५ विविधतर्ककर्कशोक्तिनिरस्ताखिलनास्तिकराद्धान्तदर्शिताक्षपादपर्यायभावेषु ६ विषमतरन्यायनिकरदर्शितानेकवचनव्यक्तिनिर्णयपरिनिष्ठाविवृताखिलप्रवचनप्रवर्त्तितविविधाध्वरनिर्वृताखिलान्तर्वाणिनिर्णीतजैमिनिमूर्त्तिप्रतिनिधानेषु ७ निरन्तरविक्रियमाणबादरायणदर्शनदर्शितानेकोपनिषद्रहस्यपरिशीलितानेकदहराद्युपासनाभ्याससमासादितपरमतत्त्वनानापाराशरिपरिचर्यमाणचरणेषु ८ परिच्छिन्नपुरुषप्रधानपरिशुद्धसत्त्वानेकान्तेवासिनिश्चितकपिलासुरिपंचशिखादिसिद्धान्तेषु ९ विदितसंप्रज्ञातासंप्रज्ञातसमाधिनिर्द्धूताखिलकषायमानसनानामस्कारिकमलभास्करेषु १० पिठरपीलुपरिमर्शपरिभाव्यमाननानाक्षणगणानुबद्धकाणादवादबहुतरं[7]वर्द्धु[8]परिसेव्यमानेषु ११ सततप्रदर्शितविविधविरिञ्च[9](?)कालपुरुषवचनोपग्रहसुपतिङ्विभागपरिकल्पिताखिलशब्दाकूपारपरब्रह्माभिनिवेशशंसितदाक्षीतनयतत्त्वेषु १२ अर्थ-

---

१. B om. °खण्डल° to °निदान°. २. B °खण्डलेषु for °सावधानेषु. ३. C om. °परि°. ४. AC om. °ल्लोल.° ५. C om. °सूक्ति.° ६. C वीरे° for विश्वे° ७. C. adds °बहुतर° again. ८. C. °ब्रदु. ९. Shall we read विरुद्ध ?

प्रकृतिपञ्चको[1]त्क्षेपादिचतुःषष्टिमुखादिपञ्चकपरिशुद्धरूपकोपरूपकविरचनादि[2]-विदितकवितावैभवेषु १३ स्वरविवृतिपूर्वाङ्गपराङ्गभावाद्याविःकरणविज्ञाताखिल-प्रातिशाख्यसारेषु १४ निरन्तरपरिशोधितशुद्धकूटादिकाकल्यन्तरांशग्रहादिस्वर-तत्त्वदेशीमार्गादितालावलिधुतविधुतादिनृत्तभेदविवृतिविवृतभरतावतारेषु १५ श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीषु निरन्त-राज्ञाकारिणः कमलनयनदीक्षितस्य नारायणोपनिबन्धपूर्विकाः प्रणतयः ॥

किं च ॥

१. येनाखिलस्य जगतो हि करग्रहाणा-
मुन्मोचने विरचिता न मनागुपेक्षा ।
तेनैककस्य वपुषा नियतस्य भूमी-
देवस्य मोचनविधौ कथमित्युदास्यम्[3] ॥ २२० ॥

श्री[4]कमलनयनदीक्षितानाम् ॥

स्वस्ति श्रीमत्सकललोकहितविहितावतारत्रिजगन्मण्डलायमानगुण-ग्रामाभिरामदिल्लीश्वरविश्रामधामसमासादितसर्वकामकमनीयमूर्त्तिषु १ श्रीसर्व-विद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥

परमेश्वराचार्याणाम्[6]

स्वस्ति श्रीमदगण्यपुण्यविराजमानविविधगुणगणोदारलसदमन्दपाण्डित्य-तिरस्कृतानेकवादीन्द्रवृन्दवशीकृतसुरत्राणसद्गोष्ठीकनिष्ठीकृतानेकसुरपतिसमा-नसामन्तमण्डलोपार्जिताखण्डकीर्त्तिधवलिमधवलिताशेषभुवनविस्तरेषु १श्रीसर्व-विद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥

१. यदुक्तं भवद्भिः परिव्राजकेन्द्रैः कवीन्द्रैर्मुनीन्द्रै रहस्यादरेण ।
विधेयं तदेव प्रभुं चिन्तयित्वा यथा शं भवेज्जीवतामाशु भूमौ॥२२१॥

ब्रह्मगिरेः

१. गीयन्ते कीर्त्तयस्ते विविधमतियुतैः पण्डितैः सत्सभायां
शुद्धानन्दस्वरूपो निखिलगुणनिधिर्ज्ञानकारुण्यसिन्धुः ।

---

१. B. om. अर्थप्रकृति to पञ्चक. २. A. विरचनाविदित. ३. B. कथमप्युº. ४. B. om. श्री. ५. AC मण्डलमण्डनाय. ६. C om. कवीन्द्राचार्य to परमे-श्वराचार्याणां. ७. BC om the whole portion from स्वस्ति to भूमौ.

विद्वद्वृन्दाभिवन्द्यः सुरगुरुसदृशः पुण्यलावण्ययुक्तः
श्रीमान्धीमान्कवीन्द्रो जयति परमुदे प्रत्यहं द्वारि साहेः ॥ २२२ ॥

२. काश्यां श्रीकोशलायां परममतियुताः पुष्करे नैमिषेये
कान्त्यां श्रीकामरूपे प्रविहिततपसस्सेतुबन्धे प्रयागे ।
ब्रह्मज्ञानावलीढा विदितगुणवरा द्वारवत्यां प्रमोदै-
स्ते ते ध्यायन्ति शश्वद्विबुधगणनुतं श्रीयतीन्द्रं कवीन्द्रम्[1] ॥ २२३ ॥

## त्वरितकविरायस्य ॥

१. खद्योता मिहिरन्ति यर्हि सहसा सिंहन्ति शालावृकाः
कर्पूरन्ति रसोनकन्दशकला वेदन्ति मिथ्या गिरः ।
चक्रांगन्ति बका द्विपन्ति महिषाः शेषन्ति वा राजिला
ग्रावाणो मणयन्ति तर्हि यतयः श्रीमत्कवीन्द्रंत्यपि ॥ २२४ ॥

२. यशसामन्यनृपाणां धान्यं वारां यथोपरि प्रायः ॥
जगति तथैव यशस्ते जयति समस्ते कवीन्द्र कुन्दाभम् ॥ २२५[2] ॥

## रामभद्रवाजपेयिनाम्

१. त्वद्दामोद्दामनीरोद्भवसलिलनिधिस्त्वद्यशस्ताम्रपर्णी-
सम्पाते भासमेते दिनकरहिमगुद्वंद्वपेशीपुटे यत् ।
मुक्तं त्वद्वैरिनारीनयनजलधरैरम्बु तस्मात्ततस्तां[3]-
स्तारा मुक्तास्तु तारा इति जगति धियं तन्वते श्रीकवीन्द्र ॥२२६॥

## मौनीरङ्गनाथभट्टानाम्[4]

१. After v. 223; AC add the following verse:—
कर्पूराभा कराभा कृतकलितकला कामदा कान्तियुक्ता
कार्णाटे कल्पवल्ली सितकमलरुचिः काशभासा प्रकाशा ।
काम्या कल्याणदा संकलयति कलितं कर्म कैवल्यजातं
कैलासे का समाना कलिकलुषहरा श्रीकवीन्द्रस्य कीर्तिः ॥

२. AC give the following verse instead of verse 225:—
प्राचामिव कविवाचां धान्यं वारामुपर्युपर्येव ।
जगति कवीन्द्र यशस्ते गौरं गुरुमत्र मौनयति ॥ cf. verse 227

३ C तस्मात्तु जाता. ४. B om मौनीरङ्गनाथभट्टानाम्.

१. मुक्तास्तु तारा इति जवा( ? )न्धान्यं वारामुपर्युपर्येव ।
जगति कवीन्द्र यशस्ते गौरं गुरुमत्र मौनयति ॥ २२७ ॥

२. कविकुमुदवनीविकासशाली निजमहसा सहसार्यपूरिताशः ।
परिचितपरविष्णुपत्कलावान् स जयति कोऽपि[1] कवीन्द्र एष चन्द्रः॥२२८

३. यज्ज्योत्स्नाप्रसरेण भाति जगती कृत्स्नापि विष्वक् परम्
वारंवारमहो महोदधिजया धारेयमित्यद्भुता ।
प्रेम्णा संप्रति साधुसंसदि वरस्यास्तां तवार्याधिकम्
श्रीमन् धीरकवीन्द्र संप्रति पदं ज्वालामुखी संमुखी ॥ २२९ ॥

४. पद्माश्रयः सततशोणतरङ्गरेखाराजीभिरंचिततलः किल विद्रुमाभः ।
सुत्रामतापपरिपालितसर्वगोत्रः संपत्करस्तव कवीन्द्र करः समुद्रः ॥२३०॥

५. मोदस्वारं धरायां प्रविततसुयशाः सर्वसंपत्तिधूर्भूः
श्रीमान् धीमान् गुणाढ्यः परजितविषयः कौतुकी साहसी त्वम् ।
नित्यं प्रीतः प्रसन्नस्त्रिपुरहरगतिः शर्मदः शौर्यवृत्ति-
श्चित्रैः स्तोत्रैः पवित्रैः सुकृतकृतमतिर्वत्सरान् भूरिशः सन् ॥ २३१ ॥

स्रग्धरेयम् । अत्र प्रतिचरणं शरर्तुहयवसुवर्णान् विहाय मन्दाक्रान्ता भवति । यथा ।

६. मोदस्वारं विततसुयशाः सर्वसंपत्तिधूर्भूः
श्रीमान् धीमान् रजितविषयः कौतुकी साहसी त्वम् ।
नित्यं प्रीतः पुरहरगतिः शर्मदः शौर्यवृत्ति–
श्चित्रैः स्तोत्रैः कृतकृतमतिर्वत्सरान् भूरिशः सन् ॥ २३२ ॥

शरादारभ्येन्द्रपर्यन्तान् वर्णान् विहाय शालिनी भवति । यथा ।

७. मोदस्वारं सर्वसंपत्तिधूर्भूः
श्रीमान् धीमान् कौतुकी साहसी त्वम् ।
नित्यं प्रीतः शर्मदः शौर्यवृत्ति–
श्चित्रैः स्तोत्रैर्वत्सरान् भूरिशः सन् ॥ २३३ ॥

शरर्तुशैलाक्षरत्रयं पंचदशात्पादान्तपर्यन्तानि चाक्षराणि विहाय भ्रमर-विलसितं भवति । यथा ।

---

1. C धीर for कोऽपि.

८. मोदस्वारं प्रविततसुयशाः श्रीमान् धीमान् परजितविषयः।
नित्यं प्रीतास्त्रिपुरहरगतिश्चित्रैः स्तोत्रैः सुकृतकृतमतिः ॥ २३४ ॥

शरत्तुहयवसुवर्णान्विहाय पञ्चदशादीनन्तपर्यन्तांश्च वर्णान् विहाय हंसी भवति। यथा।

९. मोदस्वारं विततसुयशाः श्रीमान् धीमान् रजितविषयः।
नित्यं प्रीतः पुरहरगतिश्चित्रैः स्तोत्रैः कृतकृतमतिः ॥ २३५ ॥

आद्याक्षरचतुष्टयमात्रमादाय कन्या भवति। यथा।

१०. मोदस्वारं श्रीमान् धीमान्। नित्यं प्रीताश्चित्रैः स्तोत्रैः ॥ २३६ ।

पञ्चषट्सप्ताक्षरत्रयमादाय मध्या भवति।

११. धरायां गुणाढ्यः। प्रसन्नः पवित्रैः ॥ २३७ ॥

अष्टमाद्यक्षरसप्तकमादाय मधुमान् भवति। यथा।

१२. प्रविततसुयशाः परजितविषयः।
त्रिपुरहरगतिः सुकृतकृतमतिः ॥ २३८ ॥

पञ्चदशाद्यक्षरषट्कमादाय गायत्री भवति। यथा।

१३. सर्वसंपत्तिधूः कौतुकी साहसी।
शर्मदः शौर्यभृत् वत्सरान् भूरिशः ॥ २३९ ॥

अन्तिमाक्षरमात्रमादाय श्रीर्भवति। यथा।

१४. भूस्त्वन्तिः सन् ॥ २४० ॥[1]

प्रथमाक्षरद्वयं गृहीत्वा स्त्रीछन्दो भवति। यथा।

१५. मोदश्रीमान्। नित्यं चित्रैः ॥ २४१ ॥

तृतीयचतुर्थाभ्यां सैव भवति। यथा।

१६. स्वारं धीमान्। प्रीतः स्तोत्रैः ॥ २४२ ॥

नवमादिषड्भिरक्षरैर्नगणसगणाभ्यां गायत्री भवति। यथा।

१७. विततसुयशा रजितविषयः।
पुरहरगतिः कृतकृतमतिः ॥ २४३ ॥

पञ्चदशादित्रयेणाष्टादशादित्रयेण च प्रत्येकं रगणेन मृगी भवति। यथा।

१८. सर्वसंकौतुकी। शर्मदो वत्सरान्।
पत्तिधूः साहसी। शौर्यवृद्भूरिशः ॥ २४४ ॥

---

1. BC om. सर्वसंपत्ति to सन्.

अष्टमाक्षरादि गृहीत्वान्त्यमक्षरं विहायातिजगती भवति। यथा।

१९. प्रविततसुयशाः सर्वसंपत्तिधूः
परजितविषयः कौतुकी साहसी।
त्रिपुरहरगतिः शर्मदः शौर्यवृत्
सुकृतकृतमतिर्वत्सरान् भूरिशः ॥ २४५ ॥

तृतीयादा सप्तमं नवमदशमाभ्यां च पञ्चदशाद्यक्षरत्रयेणान्तिमेनचेन्द्रवज्रा भवति। यथा।

२०. स्वारंधरायां वितसर्वसंभूर्धीमान् गुणाढ्यो रजिकौतुकी त्वम्।
प्रीतः प्रसन्नः पुरशर्मदोति स्तोत्रैः पवित्रैः कृतवत्सरान् सन्॥२४६॥

प्रथमे आद्याक्षरचतुष्टयं गृहीत्वा सप्तदशान्त्याक्षरद्वयं च गृहीत्वा द्वितीये पादे[1] चाद्याक्षरादासप्त तथान्त्यं च गृहीत्वा तृतीये चाद्याक्षरचतुष्टयं गृहीत्वा[2] तथाष्टादशोपान्त्याक्षरद्वयं च गृहीत्वा चतुर्थे चाद्यादासप्त तथान्त्यं च गृहीत्वा आर्यागीतिर्भवति। यथा।

२१. मोदस्वारं स भूः श्रीमान् धीमान् गुणाढ्यस्त्वम्।
नित्यं प्रीतः शौर्यवृत् चित्रैः स्तोत्रैः पवित्रैः सन् ॥ २४७ ॥

२३. शशौ शूरभूर्वह्निमीमाररिर्वः शगं वा विगौजीवरीयद्युगाक्रः।
पदाद्यन्तवर्णद्वयाहूयमानं सुखायास्तु तद्दैवतं श्रीकवीन्द्र ॥ २४८ ॥

२४. उदयाचलचरमाचलकूटद्वयसङ्गतायामा।
विधिनान्वबन्धि[3] धवला वन्दन[4]माला कवीन्द्र कीर्तिस्ते ॥ २४९ ॥

२५. हारं न तारं कलये न हारं दे[5]वादगारं न च हारसारम्।
साहारमीषद्भ[6]वतः सहारं हारं पुरं प्राप्य परं विहारम् ॥ २५० ॥

२६. तन्द्रालु का दिसतसे भवदीय मुद्रा
कां यां न ये कविवरा दिनरात्रि निद्रा।
सांगेन तूज निजगूज महीमहेन्द्रा
देणें असे मज शतद्वय रौप्यमुद्रा ॥ २५१ ॥

२७. पर्याय हा होय सुरद्रुमाचा द्वितीय किंवा सुरभिप्रथेचा।
विकल्प नेणों अमरामणीचा कवीन्द्र मी वर्णिन कीर्तिवाचा ॥२५२॥

---

१. C. om. पादे. २. AC. om. गृहीत्वा. ३. C विद्यानुबन्धि, A °न्वबन्धि.
४. C चन्दन° for वन्दन°. ५. C दैवाद°. ६. C °मेतद्भवतः.

२८. दानीं कल्परुहासमान दिसतो जो भासतो सर्वदा
धैर्यें सागर हाचि शौर्यविभवें[1] राधेय वाचें वदा।
बुद्धीनें दुसरा बृहस्पति खरा रूपें स्मरातें स्मरा
काव्यालापकलाकलापवचनीं श्रीभोज हा आदरा ॥ २५३ ॥

२९. सलिलनिधि कृपेचा नामधारी त्रपेचा
जनककवि गयेचा बाधतो येक येचा[2] (?)।
मुकुटमणि सभेचा मार्गकृत्सौरभेचा[3]
अति मधुर जिभेचा दुःकवीन्द्र प्रभेचा ॥ २५४ ॥

३०. तुजविण मज पाहे कोण आहे कवीन्द्रा
प्रभुवर दुसरा या भूतला कीर्तिचन्द्रा।
त्यजुनि[4] कविकुलाच्या पोषणी दूरि तन्द्रा[5]
विभवजितमहेन्द्रासक्त होई सुभद्रा ॥ २५५ ॥

३१. श्रीकामधेनु जगतीवरि आजि आली
किंवा स्वयें त्रिदशनायक भूरुहाली।
कीं मागुती प्रकटली नृपभोजमाया
श्रीमत्कवीन्द्र सकलां कविला पुसाया ॥ २५६ ॥

३२. तूझ्यानि साम्ये प्रभु कोण आहे
जो पंडितांची बहु दाटि साहे।
स्वानंदसंपूर्ण कवीन्द्र राहे
आत्मीयभावें मजलागि पाहे ॥ २५७ ॥

३३. घनधनवसनांतें पण्डितांलागि देसी
अतिचतुरकलावान् कीर्त्ति हे सर्व देसी।
सकलजनविसांवा धैर्यपाथोधि होसी
म्हणउनि कविला या श्रीकवीन्द्रार्य पोंसी ॥ २५८ ॥

३४. अति चतुर कलाचा जाणता कोण मानी
अभिनवनगरीं या नांदतो कर्ण दानीं।

---

१. C °विषये. २. C बाधते येक पेचा. ३. C °भा°. ४. C सजुनि. ५. C °चंद्रा for °तंद्रा.

कविवर पुसतों मी आदरें सांग कार्नी
यतितिलककवीन्द्रालागि गाईन गार्नी ॥ २५९ ॥

३५. षीयूषद्रवसारिणीव सुमनःसौहित्रसंवर्द्धिनी
स्वास्थानीव कलाकुलस्य सरसा कल्याणकल्लोलिनी ।
नीवृद्वंद्यकवीन्द्रभूपपरिषच्चेतश्चमत्कारिणी
वाणीयं सुमते त्वदीयवदनांभोजात्समुज्जृंभते ॥ २६० ॥

३६. देतसे कविवरासिं मोहरा जो असे प्रभुवरात मोहरा ।
तेजसा सम दिसे[1] तमोहरा तो वसे[2] सुखपदी मनोहरा[3] ॥२६१॥

३७. प्रतापतपनः परं निलयनं कलानामयम्
प्रचण्डवरपण्डितप्रकरलक्षदाता स्वयम् ।
जयन्तजनकाद्वयं समुपगम्य पुण्यालयः
क्षितीन्द्र तिलकीकृतो विजयते कवीन्द्रः कृती ॥ २६२ ॥
यश्च ।

पुण्यवतामधिवासो वासव इव वसुधामवतीर्णः । सदवधिर्धैर्यस्य[4] । परिधिः शर्मणाम् । शेवधिः कविसमुदायस्य । आधिर्विरोधिवर्गस्य । व्याधिरविद्यायाः । विततोपाधिः । दूरीकृतोपधिश्च । भानुरिव प्रवर्त्तितविमानप्रसरः । संवर्द्धितविविधसन्निधिः श्रुतिमार्गाविरोधी । सिन्धुः शौर्यस्य । अन्धुः साधुतायाः । बन्धुर्विद्वद्वृन्दस्य । सीमा सौजन्यस्य । विश्रान्तिस्तितिक्षायाः । आरामो रामणीयकस्य । धाम धर्मस्य । मर्म सत्कर्मणाम् । निलयनं[5] कलाकलापस्य । आलवालं वादि[6]सबलतायाः । प्रासादः सदाराधनस्य । उपधानं विमलकमलायाः । विपणिरगण्य[7]गुणगणमणीनाम् । पद्या सद्विद्यायाः । आदर्शः सर्वशास्त्राणाम् । शृणिरुन्मत्तद्विपानाम् । पत्तनं सत्य जातस्य । पस्त्यं स्वस्त्ययनस्य । मूलं श्रुतिकलस्य । घण्टापथः पटुतायाः । शृङ्गारकः[8] शृङ्गाररसस्य । वरुणालयः करुणायाः । तत्त्वं[9] सत्त्वगुणस्य । कान्तारं कुबुद्धीनाम् । मरुः पापपयसः । पात्री मैत्रीकरण[10]स्य । आलोको

१. AC ते जनासमा°. २. AC वसो. ३. C नमो° for मनो°. ४. Emendation Mss read सद्वधि धैर्यस्य. ५. A निलयं for निलयनं. ६. C व्याधि° for वादि°. ७. B °रगणाप° for °रगण्य°. ८. AC °पथः. ९. AC सत्त्वं. १०. AC करू°(c रु)णस्य.

लौकायतिकस्य[1]। निदर्शनं दर्शनीयतायाः। ज्वलनकीला द्विषद्दैन्योपलस्य[2]। परशुः परवेदनाकाननस्य। आलानं मानमतङ्गजस्य[3]। उपदेशकः परोपकारस्य। प्रवर्त्तकः सत्रचित्रस्य। मार्गोपदेष्टा शिष्टाचारस्य[4]। आधारः संधावन्धस्य। केदारः प्रमोदानाम्। सार्थः परमार्थानाम्। ग्रन्थिरतिथिपुरस्कारस्य। संवर्त्तः शत्रुवार्त्तस्य। ऊषरं खलतालतायाः। कपाटं कपटाचरणस्य[5]। वाटपाटच्चरः (?) शरणागताधीनाम्। निधानं सर्वमन्त्राणाम्। निदानं सर्वसंपत्तीनाम्। जेता सकलविनता[6]नियमस्य। केतुर्विनयस्य। सेतुः कीर्तिपूर्तस्य। अहेतुः कोदण्डपाण्डित्यस्य। दाँतुः[7] सर्ववर्णानाम्[8]। चित्रभानुः शात्रवान्धाकाराणाम्। दिग्विलासिनीकर्णपूरीकृतकीर्त्तिपल्लवोऽपि निवारितनिजाश्रितविपल्लवः। बल्लवबालक इव विश्वपालको ध्वंसितकंसश्च। शूर इव सद्वृत्तरसः। हरिरिव प्रतीतविक्रमः। घन इव प्रसारितापः। भागीरथीप्रवाह इवास्खलितगतिः पावनश्च। परिवादरतोऽपि परिवादपराचीनचेतोवृत्तिः सुभाषितव्यसनी। भास्वानप्यपरोपतापी। पुण्याचलोऽप्यस्तम्भी[9]। पुण्यसान्द्रः संवर्द्धितविद्वद्वृन्दः परोपकारनिस्तन्द्रो यतीन्द्रः कवीन्द्र इति ॥ १ इति प्रथमा ॥ १ ॥

३८. सदाचरणचातुरीसहचरीकृतं संततं
कलामलकुलांचितं प्रणयसंचितं श्रीजितम् ।
प्रणीयशरणीकृतं स्तुतफणीशवाग्वेदिभिः
कवीन्द्रमहमाश्रयेऽवितुमथोत्तमर्णग्रहान् ॥ २६३ ॥

यं च

निःस्नेह इति दोषैर्नीरस इत्ययशसा दुःस्पर्श इति दुर्व्यसनैरकरुण इति कारणाभिः सकल[10] इति कलिना शरीरीत्यशरीरिणा शस्त्रीति[11] परस्त्रीभिः भीरुरिति परस्वेन सहेतिरिति[12] प्राणिहत्या विशिष्ट[13] इति नष्टबुद्ध्या मनागप्यनाकलितम्[14]। समुद्रमिव महावाहिनीशपतिम्। धनञ्जयमिव महाभारतरणयोग्यम्। संकेतायतनमिव नीतीनाम्। आस्थानमण्डपमिव स्थितीनाम्[15]।

---

1. B लौकिकस्य. २. B विद्वद्दैन्यो°. ३. A °गस्य. ४. AC om शिष्टाचारस्य. ५. AC कपटाचारस्य. ६. B सकविनेता. ७. AB दातुः. ८. C सवर्णानां. ९. AC °प्यस्तं नै°. १०. C सकरुण. ११. AC शस्त्रे for शस्त्रीति. १२. AC संहति°. १३. AC °हत्याच( cv )शिष्ट. १४. C मनागनाञ्जलितं. १५. AC om. स्थितीनां to वरुणालयमिव.

सर्वस्वमिव पराक्रमाणाम्। बीजमिव विबुधसञ्जीवनतरूणाम्। वरुणालयमिव शरणागतानाम्। धर्मराजमपि सुयोधनम्। नीलेन्दीवरसोदरनयनमपि वन्दितत्रिलोचनम्। तीर्थं तथ्यस्य। कोशं कुशलतायाः[1]। प्रतानं प्रणयितायाः। चन्द्रशालातलं सुशीलतायाः। भीष्ममिव भागीरथ्याः। कुमारमिव गिरिजायाः। दामोदरमिव देवकनन्दिन्याः। जयन्तमिव पुलोमजायाः। परीक्षितमिवोत्तरायाः। भरतमिवशकुन्तलायाः। प्रेमपात्रं परिणतशेमुषीनिजजननीसदुदरखनिरत्नभूतम् बहलप्रभापटलनिर्विषयीकृतचन्द्रचण्डातपाच्छच्छविपुञ्जं[2] सततवसुमतीपालमौलिहीरांकुरैर्नीराजितचरणसरोजं राजराजमिव शेवधीनां विश्वामित्रमिव सिद्धीनां शतक्रतुमिव समृद्धीनां काव्यमिव नव्यभव्यकाव्यानां भर्त्तारम्। शरणागतत्रासहर्त्तारम्। शार्दूलमिव मृगाणाम्, सिंहमिव मातङ्गानाम्, गरुत्मन्तमिव पन्नगानाम्, श्येनमिव खगानाम्, खलानां परमोद्वेगकर्त्तारम्। समुचितमृगमदपरिमलवाहिनांगरागेण राजमानं मूर्त्ताभिधानं पुण्यावदानं संपान्निदानं समिति संमुखोपचितवाङ्मुखश्रुतिसावधानं[3][4] मङ्गलसंविधानं कृतविविधविधानं[5] संपादितबिन्दुवृन्दविधानं द्वारोच्छ्रायितविधानम्, भूतिमन्तमपि[6] स्नेहमयं जगत्प्राणमयमपि तेजस्विनं पार्थिवमपि गुणमयं घनरसात्मकमपि शब्दगुणप्रसादं दक्षिणाशाप्रसाधकमपि[7] प्रचेतसं सदुत्तरमपि शुनासीरं सदम्बरमपि ऊर्ज्जितकम्बलं दधानम्। घनागममपि समुत्सारितपङ्कम्। निर्जिताखिलभूभृतमपि गोत्रवर्द्धनम्। सुरभिमिर्व[8] सुमनसां गुणप्रकाशकं पृथुमिव प्रसादितपृथ्वीतलं नागलोकमिव भोगिसंपन्नम्। चापमिव सद्वंशजातं द्विरदमिव[9] दानभृतामग्रगण्यम्। कुलाङ्गनामिव अनन्यगम्यां प्रभुशक्तिमुद्वहन्तं रविकुलमिवाकुलकविकुलं[10] कोकलोकमानन्दयन्तं चिन्तामणिमिव श्रीसंनिधानरमणीयम्। शतमन्युमिव शास्त्रानल्पलोचनं सुहस्तमप्यविहस्तम्—सत्कवितावितानितभूमिप्रसराः कविवरविसराः[11] निजनिजसूक्तिमौक्तिकैः सोत्साहमहमिकया प्रयासहासं सन्ततं परिस्तुवन्ति सकलपरानन्दसान्द्रं योगिधुरंधरधौरेयकपारीणम्[12], विद्याम्भोधिपारीणं यतिकुलचन्द्रं कवीन्द्रमिति द्वितीया ॥ २ ॥

---

१. C को° for कु° २. AC तपाकच्छवि°. ३. B सुखो° for संमुखो°. ४. C °साधनं. ५. C om. वि. ६. B भूतिमपि. ७. C °प्रसाद°. ८. A सुरभितामिव. ९. AC om. सुमनसां to द्विरदमिव. १०. AC om. कविकुल. ११. AC om. कविवरविसराः. १२. B धौरेयधुरीणं C धौरेयकधु°.

३९. प्राची शचीसहचरेण विकासहासम्
वासन्तिका सुरभिणा करिणापि सेना।
कौलीनताच विनयेन नयेन संपत्
दिल्लीशसंसदपि पाति[1] कवीन्द्रधाम्ना ॥ २६४ ॥

येन च

सर्वदाकारि सत्कर्मनर्मपरंपरा। कृतं कृतयुगवत्कलिधर्माचरणम्। प्रणयेना[2]सादिता गुरुजनाशिषः। रभसोत्सारितानि शिवश्लोकैर्दुःस्वप्नदुर्निमित्तानि। सम्यगभ्यस्ताः सुविद्याः। विधिवदाराधिताः सभ्याः। प्रपंचेनोपासिता वह्नयः। मुदाभ्यर्चितानि सदैवतानि दैवतानि। संमोदितास्सदसि वसनाशनभूषणादिभिर्भूनिलिंपाः। प्र[परि]क्रमणानमनस्पर्शन[नैः]परिशीलिताः सुरभयः। नरसिंहेनेव खरनखरकुठारकोटिविदारितामितबलै[3]वदरिसपक्षदैत्यपक्षवक्षःस्थलेन। नलनहुषाम्बरीषपरीक्षितां सुकृतां वृत्तिमनुसरता। सुधावता हरिणांचितेन जैवातृकेणोपमितेन। ग्रीष्मवर्षागमसमयेनेव सर्वत्र संवार्द्धितायेन। शचीपतिनेवा[4]त्मनुतौ साचीकृतवदनेनाप्यानन्दसदनेन। क्ष्माभृदाश्रितपदेनापि विपदे[5]पदेन[6]। सहृदयेनाथ सुहृदय[7]वेदिना। सुग्रीवेणापि सुवृत्तहनुमता। रामेणापि पुण्यजनोपकारिणा[8]। विनतानन्दनेनापि दीर्घपृष्ठेन। विनायकेनापि कविनायकेन। विशालनेत्रेणापि सूक्ष्मतरनेत्रेण। वन्दितमित्रेणाप्यानन्दितमित्रेण। समुचितमनुनापि वसिष्ठेन। यमुनाप्रवाहेणेवामुना चक्रवता सुरतरङ्गिणीव विभ्रमवती[9] चित्तवृत्तिरभेदि। पवित्रेण[10] नदीनेनाप्यनीचवृत्तिपूर्णेन। प्रशंसितवेशेन[11] सदोत्तमश्लोकगुणगानुनाथ[12] न धनदानुना। पूतजानुना[13] धन्यतमेनानेनापरुषा[14] कविता वनितेवात्मसादकारि[15]। फलितप्रसारितरुणाक्रीडोद्यानेव जीवातुनार्येण[16]। द्विजराजीयराजतसंख्यावताप्यसंख्यपराक्रमेण। साक्षाद्वाचस्पति-

---

१. A घात; C याति; Shall we read भाति ? २. B प्रणामेना°. ३. AC om. बल. ४. A सर्वो यति°. ५. C विपदा°. ६. AC °नापि. ७. B श्वहृदय°. C स्वहृदय°. ८. B पुण्यजनको°. ९. AB विभ्रवती; C °भ्रमवृत्ति. १०. B adds; अपि अपवित्रेण after पवित्रेण. ११. B adds अपि स्वप्नेनाशंसितवेशेन after °वेशेन. १२. C °गणानुनाथ. १३. AC om. पूतजानुना. १४. C करुषा १५. AC °वचितानिचितेवात्मसाद( C समाद )कारि. १६. AC नार्थेन

नापि कविना। सौम्येनापि भास्वता। मङ्गलाभिधानेनापि परापकृतिमन्देन, सुमतिना वसुमती कान्तिमतीव बभारेति तृतीया[1] ॥ ३ ॥

४०. येनावनीशकर्णे कुन्दसवर्णे[2]ऽवकल्पिता कीर्तिः।
नियतं निजस्य तस्मै भावुकमीहे कवीन्द्राय ॥ २६५ ॥

यस्मै च।

वृषोपस्थितचित्रभानुसमानधाम्ने। बृहद्भानुसंतापिततपनीयोपकृतोरुगुटिका[3]कृतदाम्ने। सुकृतोच्छ्रायितवाचंयमोपस्तूयमाननाम्ने[4]। सर्वदोत्साहपरवशतयोपनीय[5]मानान्यूनन्यूंखोचितसाम्ने। असंख्यसंख्यावज्जेगीयमानगुणग्रामसीम्ने। सकलाशावकाशसेवासिता[6]मितविनयभूम्ने। महोपचितसाधुवादानुचितविकत्थनाङ्गीकृतात्यन्तलघिम्ने। अखिलसुरभिसमाजसंजीवनाविकलाय विनोदोपरतायापि विनोदपराय। स[7]शौटीरबिन्दुवृन्दगन्धाय। श्रमवच्छंबाय कलवत्कंबाय[8] संकल्पकल्पितानेककल्याणविशालाशयाये[9] विद्वन्मेलकाय[10] संचारशौण्डाय कल्पितानेकविबुधोपायाया[11]नुष्ठानकनिष्ठीकृ[12]तवशिष्ठादिविशिष्टसमाजाय[13]। प्रतिसदनजायमानावदानपरंपरानन्दसन्दोह[14]कन्दाय रसरागरङ्ग[15]गीतिगमकगीश्चातुर्य[16]चर्याचमत्कारविदग्धाय। अ[17]खर्वगुणगर्वपर्वताय सर्वो[18]र्वीसुरश्रुतिसन्ततिसंश्रुतोदारचरिताय। अनवरतमभिसंमं (?) श्रुतिस्मृतिधर्मप्रपंचश्रवणमनननिदिध्यासनधारणा[19]समाधिसाधारणयोगसाधनशमदमनियमसमापितकामक्रोधमदमत्सरदम्भलोभसंरंभाय। अ[20]हर्दिवमवनीतलतिलकीभूतविद्वज्जनसीमन्तिनी[21]समुदायाः[22] सहसा स्पृहयन्ति अविकलसकलोत्तुङ्गमङ्गलानि। गायन्ति च[23] गृहकर्मारम्भेषु दोलाखेलासु[24] निजनिजपाकसान्त्वनेषु कीर्त्तिपूर्त्त[25]प्रवर्त्तकाय यतीन्द्राय प्राज्यमद्राय[26] कवीन्द्रायेति चतुर्थी ॥ ४ ॥

---

१. B om तृतीया. २. C om कुन्दसवर्णे. ३. C वृत°. ४. B adds साधु after स्तूयमान. ५. B °गीय°. ६. B °संवासिता. ७. C om स. ८. C श्रमवच्छंबलंबायकत्वावत्कंबाय. ९. AB विशायाय. १०. AB विद्वन्मेलकार. ११. C विबुधाय. १२. B सत्कर्मानुष्ठी°. १३. A °दि. १४. C °मदोह°. १५. C om रंग. १६. C वर्य for चर्या. १७. C आवर्त्त°. १८. B °पर्वतापसर्वोर्वी. १९. A °धारण°. २०. AC अहार्दिन. २१. AC सीमंतिनः. २२. B संसुदयाः. २३. C व for च. २४. A om सु. C दोलाखेलसुनिजनं. २५. C कीर्तिपूर्व°. २६. C om यतीन्द्राय to प्राज्यमंद्राय.

४१. चित्ते[1] चकोरी वसुधांशुमण्डलात्
स्वैरं मयूरीव बलाहकोदयात्।
सत्यंविपश्चित्समितिः परां मुदम्
द्राग्याति[2] नित्यं सुमतेः कवीन्द्रतः॥ २६६॥

ययातेरिव संस्तुतायतः सुरभेरिव संपन्नजातेः वाचस्पतेरिव विबुधजनसंस्तुतमतेः[3] वञ्चितविप्रलापादप्यञ्चितविप्रलम्भात्[4] विद्वद्वृन्दोदवसितानवरतसञ्चरद[5]मितदैन्यदन्तावलदलनकलाकोविदान्। दूषितनृशंसादपि तोषितनृशंसान् पूजितदेवादपि न्यक्कृतदेवान्। कुसुमप्रियादप्यपास्तकुसुमान्। कृतारिवर्द्धनादप्याश्रितवर्धनकारिणः। निर्जितशय्यादपि परिचितशय्यान्। सुमेरोरिव मित्रोदयहेतोः। पुष्पकेतोरिव सुमनोभरप्रमोददायिनः। सूर्यादिव दोषाकरम्लानिकरणात्। चिन्तामणेरप्यचिन्त्यप्रभावात्। सम्भावितासंख्य[6]संख्यावन्मुखकमलविलासवतीसरस्वतीपरिचितपुण्ययशसो हारीभूतविद्वत्कुल[7]हरिश्चन्द्रादपि दानवीरान्। प्रवर्त्तितालौकिक[8]विद्यात्। आबालभूपावधिजनसमूहाः परमोदारवाग्विलासपरिणतचातुरीचमत्कारं चिरतरं चित्तकोषे निरस्तदोषे सञ्चयन्तितरां यतिकुलमहेन्द्रात्[9] कवीन्द्रात् इति पञ्चमी॥ ५॥

४२. कल्याणप्रसरोऽस्तु ते प्रतिपदं हर्षाश्रवस्याश्रव–
प्राविण्याम्बुनिधेः परोदयविधेर्धैर्यावधेः श्रीजुषः।
दोषध्वान्तनिवारणैकचतुरस्याम्नायहृद्वेदिनः
क्षोणीचन्द्र कवीन्द्र सद्गुणलसद्विद्वद्घटाकल्पद॥ २६७॥

यस्य च।

अत्यन्तप्रमोदमेदुर[10]बले रिवत्यागः स्थानेषु। सस्पृहता[11] शिबेरिव परोत्साहेषु। श्लाघा धाराधीशस्येव विद्वज्जनसंवादेषु। दम्भस्तु नलनहुषयोरिव स्वायत्त[12]कवितालालनाखेलासु। कृतज्ञता विक्रमार्कस्येव पुरुषवरेषु। सन्तोषः शङ्करस्येव कलाकलापकेषु। मैत्री[13] सुमित्रानन्दनस्येव[14] सदाचाररतेषु। संकोचः शचीसहचर[15]स्येव गुरुवचनेषु। खलता बिभीषण[16]स्येव चपलेषु। तत्परता

१. C वित्ते. २. B डारयति. ३. B °मते. ४. B °लापात्. ५. A नवरसाञ्च°. ६. A om संख्य. ७. B हारीभूताद्विद्वकुलस्या (C स्य). ८. B adds लोक after लौकिक. ९. C महोक्षात्. १०. B मेदुरस्य बले°. ११. A स्पृहता. १२. B स्वापत्र; A स्वावत्तक°. १३. AC मैत्रीमिव. १४. AC °नन्दनस्य. १५. AB शचीहर°. १६. C विर्ना°.

तारापतेरिव धर्मकर्मसु। विश्वासो व्यासस्येव श्रुतिप्रसूतस्मृतिप्रपञ्चेषु। प्रागल्भ्यं वसिष्ठस्येव[1] सभ्यसभासु। तितिक्षा भरतस्येव क्षमातिलकेषु। वञ्चकता शर्यातेरिव पराङ्गनासंसर्गेषु। दया काश्यपेस्येव[2] दीनजनावनेषु। नियम[3]परिपालनं हरिश्चन्द्रस्येव[4] प्रतिज्ञातेषु। चिन्ताप्रतानिता गौतमस्येव शास्त्रतत्त्वेषु[5]। सदानुरागः काव्यस्येव नव्यनव्य[6]सत्काव्यप्रबन्धेषु। सौजन्यं विश्वामित्रस्येव सत्रकृत्सु। दाक्षिण्यं क्षणदाकरस्येव क्षणलक्षणेषु[7]। पाण्डित्यं गाण्डीवधनुष इव कोदण्डोद्दण्डाकाण्डसज्जनेषु[8]। शूरता शौरेरिव तरवारिपरिचयेषु। कारुण्यं[9] रघोरिव शरणागताहिततमामितकुटुम्बकेषु। लुब्धता[10] ऋतुपर्ण[11]कर्णयोरिव लब्धवर्णसंमाननेषु[12]। भीरुता तापसस्येव परस्वहरणेषु। वन्दारुता अक्रूरस्येव वृन्दारकपदारविन्देषु। विदुरता विदुरस्येव बिन्दुवृन्दसंवादेषु। पराङ्मुखता दाशरथेरिव परापवादेषु। निदर्शनता गाङ्गेयस्येव कीर्त्तिमूर्त्तिषु[13]। दीर्घसूत्रता चित्रशिखण्डिजस्येव[14] कार्यारम्भेषु। कृपालुता जीमूतस्येवाभिमतजीवदानसमयेषु[15]। विलासवशता शतानन्दस्येव तौर्यत्रिकेषु। सकलावनिचक्रतिलकीकृतकीर्त्तिपल्लवस्य यतिवरकवीन्द्रस्येति षष्ठी ॥ ६ ॥

४३. प्रबले सकले जाते[16] कवीन्द्रेऽत्र धरातले।
कवीनामधि[17] वेदमासन्नवीनाकल्पभूधराः ॥ २६८ ॥

यस्मिंश्च।

परापवादमूक सुजनसंजवनपरमानन्दकारके टङ्कमात्रोत्सारितानेकदुर्गतानीके प्रशस्तिमूलधारिणि क्षणाम्भोधिमध्यविहारिणि प्रसूनमालाभारिणि सुवन्दिवृन्दसंस्तुते। भ्रूकुंशाभ्यसितलास्यलम्पटे प्रसारितोचितयशःपटे। विकस्वरसहकारनवपल्लवप्रसार[18]विराजमानकरपङ्कजोदरे महादानायातामितयाचकलोककोलाहलमुखरीकृतसंतता[19]जिरे। क्रमकोद्गीर्णमहोदीर्णाविस्तीर्णवर्णस्वरक्रमश्रवणानन्दितश्रवणे। सन्ततोद्गीतोपनिषन्निनादप्रतिध्वनितसभा-

१. C प्रागाल्यं च मिष्ठस्येव. २. B काश्यस्येव. ३. C नियत°. ४. AC हरिश्चंद्रस्य. ५. B °तल्के(र्के)षु. ६. C °भव्य°. ७. C लक्षणलक्षणेषु. ८. Emendation. AB कौदण्डं दण्डोद्दण्डकाण्ड°; C कोदण्डोदण्ड काण्ड°. ९. C om. the passage from कारुण्यं to परापवादेषु. १०. A. लघुता. ११. B. अनुर्ण°. १२. B संमानवेषु. १३. AB कीर्त्तिषु. १४. B चित्रखण्डिजस्येव. १५. B. °समयेंषु. १६. A याते for जाते. १७. AC कवीनामपि. १८. C. °प्रसर°. १९. A. संतता°.

मण्डपे। अभ्यसितपताकेप्युच्छ्रितकीर्त्तिपताके[1][2]। परशुराम इव परशुभदायिनि[3]। अष्टविधतुरगारोहणनिपुणे। तथाष्टधानृत्यकलापारगे। चतुर्विधवाद्यविद्याप्रवर्तके। षड्विधबलमालिनि[4]। अष्टावधानसंपन्ने[5]। समानेऽप्यसमाने। संमानितस्थविरेऽप्यसंमानितस्थविरे। परिचितविहारेऽप्यपरिचितविहारे[6]। भुवनरक्षके तोषितारक्षके कृतधर्मावापेऽपि न्यक्कृतावापे। शोभनपञ्चाङ्गेऽपि ऊर्जितसप्ताङ्गे। पुण्यपरिग्रहेऽपि पुण्यश्लोकपरिग्रहे। कल्पितवेशेऽप्यकल्पितवेशे। कपाटवत्सेऽप्युत्सारितारिवत्से। दूरीकृतविषादेऽप्यूरीकृतविषादे[7]। राजनीतिनिपुणे तरुणारुणप्रकाशे स्वकीर्त्तिनर्त्तकीसुषमासंराजितसकलाशावकाशे[8] समस्तानवद्यविद्यानिवासे विद्वद्गुणग्रहणप्रमोदसान्द्रे समुल्लसदमन्दकुन्दसुन्दरयशोवृन्दमन्दीकृतचन्द्रे भव्यभक्तिसम्भारप्रसादितसदासंमदानन्दामोदावलीमेदुरनिजहृदयेन्दिरामन्दिरासादितरुद्रे[9][10]। सद्यः समुद्वदनहृद्यपद्याद्यनन्तविद्यासमुद्रे। महीतलमहामहीयमानमहेयपुण्यश्लोकमुद्रे[11][12](?)। महोदाननिर्विकारससारसंसारपरोपकारानस्ततन्द्रे[13]। [14]निजनिजभावमुद्भावयंति कलाकलापैः समुल्लसन्तः सन्तः[15] सततं यतीन्द्रे विश्वंभराचन्द्रे श्रीमत्कवीन्द्रे इति सप्तमी ॥ ७ ॥

पट्टवर्द्धनमहादेवभट्टानाम् ॥

१. वाल्मीकिः प्रथमं बभूव तदनु श्रीव्यासदेवोऽभवत्
काव्ये[16] विश्रुतकीर्त्तिरास तदनु श्रीकालिदासः कृती।
तेषां चारुयशो गुणोत्तम तिरोधत्से यतः सांप्रतम्
हे योगीन्द्र कवीन्द्र तावकमतो व्यक्तं जनैर्गीयते ॥ २६९ ॥

२. धीराधीश कवीन्द्र कुन्दकुसुमस्तोमत्विषि त्वद्यशो—
राशौ मग्नतया कथा पुनरिमान् जानातु युक्त्या जनः।

---

१. C मण्डपेभ्युसित. २. C om कीर्त्ति. ३. C परशुन°. ४. AB मानिनि. ५. AC read अष्टविधसंयते. ६. C om विहारेप्यपरिचित. ७. A om प्यूरीकृत. विषादे. ८. C सकलावकाशे. ९. C संसार for संभार°. १०. A om सदा सं. ११. AB °महीपः. १२. C मुद्रे for मुद्रे. १३. C om सहोदान to °स्ततंद्रे. १४. A om निज to °द्भावयंति. १५. C om संतः. १६. C काव्येऽपि.

अङ्के रङ्कुमतः कलानिधिरधादीशो विशालेऽनलम्[1]
भाले[2] कालभुजङ्गमङ्गविषये श्रीखण्डभूमीरुहः ॥ २७० ॥

मैथिलस्य ॥

१. तर्के प्रोद्दामतर्कः फणिपतिभणितौ केवलं शेषवेषो
मीमांसायां च[3] मीमांसनकलितमतिः सांख्यसंख्यावदाद्यः ।
योगेऽत्यन्ताभियोगो निखिलगुणनिधिः ख्यातरीतिः सुनीतौ
वेदार्थाभिज्ञ एको जगति विजयते श्रीयतीन्द्रः कवीन्द्रः[4] ॥ २७१ ॥

दिवाकरभट्टानाम्

१. विद्वद्वर्य विभो कवीन्द्र भवतो योग्यान्[5] विशिष्टान् गुणान्
ज्ञात्वा तत्त्व[6]दनन्तरोद्भवगुणग्रामोदयेऽपि स्थिरान् ।
तन्नाशं प्रवदन्ति मूढमनसो ये तार्किकास्तेऽपि ते
युक्तायुक्तविचारशून्यहृदयाश्चित्रं तवेष्टाः[7] पुनः[8] ॥ २७२ ॥

विश्वनाथज्योतिर्विदाम् ॥

१. ये सन्तः पृथगाश्रयाः क्षितितले सद्भिः स्तुताः सद्गुणा-
स्तेषामेकतमे परार्थपरमे संभूय वासं क्वचित् ।
इच्छन् सत्फल[9]मत्र सद्गुणभृत[10]श्चाति[11]र्यत्नाद्गुणान्
सर्वांस्तांस्त्वयि[12] सत्कवीन्द्रविबुधे वेधा व्यधात् सादरम्॥२७३॥
२. न स्वागन्तुकबाधकाः सुफलिनोऽप्येते कृतेर्भेदका
नाप्यन्याश्रयमाश्रयन्ति विकृतावप्यत्र कार्यक्षमाः ।
मीमांसाकुशलस्य तेऽपि किल चेदेवं गुणाः सन्त्यतः
श्रीमत्पूज्यकवीन्द्रवर्य भवतो नैवोपमानं क्वचित् ॥ २७४ ॥
३. धर्मं धर्मधनं धनञ्जयमथो शौर्येण सर्वोत्तमम्
भीमं भीमबलं च कर्णमसमं[13] दाने स्मरं देहिनम् ।

---

१. AC क्षणं for ऽनलं. २. AC काले. ३. B मीमांसातत्त्व°. ४. AC trans. यतीन्द्रः and कवीन्द्रः. ५. C योगान्. ६. A सत्त्व° C तत्त्व°.. ७. तदिष्टा. ८. AC om पुनः. ९. A मत्फल°. १०. C °भृतां. ११. C वाचि for चाति. १२. C सर्वांस्तान्विलसत्. १३. Ac °सदृशं.

द्रष्टुं वाञ्छसि चेत्तदा बुधवरं दिल्लीपुरं सादरम्[1]
गत्वा विज्ञ[2]कवीन्द्रवर्यविबुधं दृष्ट्वा सुखी त्वं भव ॥ २७५ ॥

४. नाप्राप्तप्रापणा[3]र्थं न हि भवति तथा पूरणार्थं न चान्य-
व्यावृत्त्यर्थं तथापि प्रबलहतरिपो श्रीकवीन्द्र त्वदीयम्।
प्राज्यं राज्यं परेषामनधिगतफलप्राप्तये देव यस्माद्
द्वेवाक्य(?)व्यायतो[4]ऽतो दशशतशरदो जीव भो[5]ग्यैर्बुधानाम्॥ २७६॥

५. न स्फोटो न खलु तवास्ति वर्णलोपो नो भङ्गः प्रकृतिषु नापि चोपसर्गः।
नो पातस्तदपि सुशाब्दिकः कवीन्द्र ख्यातोऽसि त्वमिति[6] जनेषु चित्रमेतत्॥

६. सर्वार्थः[7] सर्वदेवाप्तो[8] व्यावर्त्यो न कवीन्द्र ते।
द्वे इत्याद्युक्तिवद्भाग्यमतोऽन्यफलसिद्धये ॥ २७८ ॥

७. विद्वन्नैवो[9]पमा ते किमपि न विषमं नापि दृष्टान्तसख्ये
सन्देहासंगती नो[10] धरणिसुरगुरोऽनन्वयो नो कवीन्द्र।
व्याघातापह्नुती न[11] प्रगुणगुणनिधे नो विरोधप्रतीपौ
साहित्याद्वैतभावो जगति विजयते तत्तथापीति चित्रम् ॥ २७९ ॥

८. वाणीशो यस्य वाण्यां नयनकमलयोः स्निग्धयोर्यस्य लक्ष्मी-
र्लक्ष्मीनारायणो यन्मनसि भुजयुगे यस्य हंहो हनूमान्।
यस्य क्रोधे कृतान्तो यशसि शिशिररुक् यस्य यस्य प्रतापे
सूर्यो देवाश्रयं तं मनुज इह कथं नाश्रयेच्छ्रीकवीन्द्रम् ॥ २८० ॥

पुनर्भैयाभट्टानामष्टौ ॥

स्वस्ति श्रीमदखण्डमहीमण्डलाखण्[12]डलापारकृपापारावारविश्रामधामनि-कामकामाभिरामसकामागणितगुणगणैकनिलयनि[13]जनियमविवशीकृताचलाव-लयसमस्तवाङ्मयनिकाया[14]चरणपरैकलक्षदानमानसंभावनासंभावितानंतावनी-वनीपकलक्षजेगीयमानातिमानकीर्त्तिमूर्त्तिनर्तकीसमधिष्ठितजगदङ्गणा[15]निजप्रताप-

---

१. B सागरं for सादरं. २. C °भिज्ञ°. ३. AB नाप्रापणार्थं. ४. C. वाक्ये, B. न्यायतो for व्यायतो. ५. C °वाक्यै° for °भाग्यै°. ६. C त्वमसि. ७. AB सर्वोऽर्थः. ८. AB °दैवाप्तो. ९. C विद्वत्तैवोप°. १०. A से देहासंगतीनां, C संदेहासंगतीर्णो. ११. AB अपह्नुतिर्न. १२. C om खण्ड. १३. °गणैः धुरिलय. १४. AC यत्र यक्ष B. निकाप्यत्रप्यक्ष. १५. AC दङ्गना.

कालानलकीलजालकलिताखर्वगर्व[1] विरुद्धगणमहोदार[2]चरिताद्भुतपरोपकृतिसंतर्पितसकलजनोदीर्यमाणजयस्वनेषु । श्रीमद्यतीन्द्रवर्यश्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीषु ॥ १ ॥

## वीरेश्वरभट्टमौनिनः ॥

उपदेष्टा सच्चेष्टानाम्॥१॥भूमिर्भव्यतायाः॥२॥ समुद्भवो वैभवस्य॥३॥ सन्निधिः साधुतायाः ॥४॥ निलयं मङ्गलानाम् ॥५॥ वसुधानिधिर्बुधविबुधानाम् ॥ ६ ॥ आधारो निराधारधरासुराणाम् ॥ ७ ॥ स्तुतो वस्तुतो[3]ऽस्तगिरिः समस्ताशस्तवस्तूनाम् ॥ ८ ॥ आलयः कलाकलापस्य ॥ ९ ॥ अविषयोऽशेषकलुषविषयाणाम् ॥ १० ॥ श्रेयानश्रान्तमाश्रयो[4]विश्वविश्रान्तिश्रेणीनाम्॥११॥ तत्त्वं सत्त्वस्य ॥ १२ ॥ मुख्यः[5] सखा नित्यसत्यस्य ॥१३॥ क्षेत्रमक्षयक्षमायाः ॥ १४ ॥ अक्षुण्णः क्षमायाम् ॥ १५ ॥ व्रध्नायमानो महामोहा[6]न्धकारधारायाः ॥ १६ ॥ अग्रगण्योऽगण्यगुण्यपुण्यवताम् ॥ १७ ॥ मूर्द्धन्यो[7] धन्यानाम् ॥१८॥ वरेण्यः शरण्योऽनन्यशरणानाम् ॥ १९ ॥ चारुचिन्तामणिर्याचकनिचयचिन्तितानाम् ॥ २० ॥ अकलितः कलिकालकालानलज्वालाजालानाम् ॥ २१ ॥ निकषोपलः सकलशास्त्रनीलोपलानाम् ॥ २२ ॥ सुवर्णवर्णनीयो लब्धवर्णसुवर्णानाम् ॥ २३ ॥ कर्णवदभ्यर्णमाकर्णनीयः[8] कर्णैः सुवर्णदानेन ॥ २४ ॥ अनभिमुखो निखिलविषयसुखानाम् ॥ २५ ॥ समूलोत्खननः समुच्छृंखलखलतानाम् ॥ २६ ॥ शोषको रोषदोषसिन्धोः ॥ २७ ॥ अनायत्तो विपत्तेः ॥२८॥ आरादरातिरविरतेः॥२९॥ विमतस्ततानां मत्ततानाम् ॥३०॥ संमतः सुमतीनाम् ॥३१॥ अखण्डखण्डकृद्दीननदीनपीनदैन्यसैन्यस्य ॥ ३२ ॥ मूलमनुकूलतायाः ॥ ३३ ॥ अभूमिर्दुरभिमानस्य॥३४॥ अस्थानं दुरवस्थानाम् ॥३५॥ स्थाने स्थानं सद्व्यवस्थानाम् ॥३६॥ भिदुरभिदुरः[9] प्रभूतसंभूतभूतभीतिभूरिभूरुहाणाम् ॥ ३७ ॥ अदत्तावकाशः प्रमत्तानाम् ॥३८॥ संभूतिः शुभारंभाणाम् ॥ ३९ ॥ आकरः[10] सदाचाररत्ननिकराणाम् ॥ ४० ॥ रत्नाकरो नूतन[11]-

---

१. B om. गर्व. २. AC add कृताद्भुतपरोपकारसंतर्पित after महोदर. ३. AC om. वस्तुतो. ४. C श्रेयान् श्रातानां. ५. AC मुखसखा°. ६. C om मोहा. ७. A धूर्मण्यो for मूर्द्धन्यो. ८. BC read कर्णवदभ्यर्णावभ्य°. ९. B भिदुराभदुरः. १०. A आकारः. ११. C नूत्न for नूतन.

परोपकाररत्नानाम्[1] ॥ ४० ॥ सनाभिः पद्मनाभस्य ॥ ४१ ॥ नाभिश्चातुर्य-चक्रस्य ॥ ४२ ॥ उत्तरोत्तरोपचीयमानबृहत्तरोपशमतरोर्मूलम् ॥ ४३ ॥ कूलं कल्याणकलाकौशलकुलीनतासमुल्लोलकल्लोलमालाकलितकल्लोलिनीका-न्तस्य ॥ ४४ ॥ संवर्धको[2] विशुद्धधीसमृद्धीनाम् ॥ ४५ ॥[3] अनन्तासन्तानो-ऽनन्तायितसंतापहृदनन्तामण्डलस्य ॥४६॥ शुण्डीखण्डनकृदखण्डपाखण्डखण्डस्य ॥ ४७ ॥ संमुख्यो[4]ऽसंख्यसांख्यसंख्यावताम् ॥४८॥ पतञ्जलिप्राञ्जलः पातञ्जले सामञ्जस्येन ॥ ४९ ॥ मांसलो मीमांसायाम् ॥ ५० ॥ निःशेषविशेषज्ञो वैशेषिकाशेषविषयाणाम् ॥ ५१ ॥ सर्वोत्तमो वित्तमो[5] गौतमो[6]क्तेषु ॥ ५२ ॥ नितान्तकान्तः सकलवेदवेदान्तवेदानाम्[7] ॥ ५३ ॥ माननीयः[8] पाणिनीयानाम् ॥ ५४ ॥ ध्रुवमहीन्द्रोक्तिवित्सु महीमहीन्द्रः ॥ ५५ ॥ काव्या-धिकः काव्यादिषु ॥ ५६ ॥ आर्य आचार्यः पाराशर्यवर्यवचनेषु ॥ ५७ ॥ धुर्यश्चातुर्यभाजाम् ॥ ५८ ॥ अविस्मृतिः स्मृतिषु ॥ ५९ ॥ सुरेन्द्रः श्रीकवीन्द्रो यतीन्द्रः भू[9]सुरेन्द्राणाम् ॥ ६० ॥

### स्वामिपण्डितानाम्[10] ॥

१. त्वत्कीर्त्तिकर्पूरसुपूरगन्धलिप्ता यदि स्युर्न दिशः कवीन्द्र ।
सुराः किमाभिष्परिभोक्तुकामास्तदा किमित्यप्सरसस्त्यजेयुः[11] (?)॥२८१

२. कवीन्द्र त्वद्गुणान्वक्तुं रसना संकुचत्यतः ।
करदानभियां पुंसां करदानं करोषि यत् ॥ २८२ ॥

### वीरेश्वरभट्टानाम् ॥

१. वाराणस्यां प्रयागादिषु च बहुषु किं[12] तीर्थजातेषु जन्तो-
र्यात्रा जायेत जातु स्थविरशिशुजनानाथदीनादिकस्य ।
कालेऽस्मिन्घोररूपे कलिकलुषभयेनावतीर्णो यदि स्यात्
साक्षाद्धर्मस्वरूपो निखिलजनहितः श्रीकवीन्द्रो यतीन्द्रः॥२८३॥[13]

---

१. AB यत्नानाम् for रत्ना°. २. Emendation AB समर्द्धसो. C सधर्मको. ३. A adds पतञ्जलि प्राञ्जलयः before अनन्ता°. ४. Emendation for सन्मुख्यें, A om. 49 and repeats 56, C om 49. ५. C विनमो. ६. C om गौतमो. ७. C वेदान्तकानाम्. ८. C मननीय. ९. B om भ. १०. AC स्वामिनां; ११. A श्वरसत्यजेयुः, B °मस्त्यजेयुः १२. C om किं. १३. A om verse 283

२. वाराणसीप्रयागावुभौ जनैर्जगति यावति ख्यातौ[1]।
तावति कवीन्द्रकीर्तिर्मनोज्ञमूर्तिर्नरीनर्ति ॥ २८४ ॥
३. तीर्थराजस्य काश्याश्च कवीन्द्रस्य च संप्रति।
अभिधानत्रयं लोके साहचर्येण गीयते ॥ २८५ ॥
४. श्रेयः कुर्युः कियन्नाम स्वदेहैर्यतयः परे।
तत्पराद्धं परद्वारा कवीन्द्रः कुरुतेऽन्वहम् ॥ २८६ ॥

कूर्माचलीयराजकीय**भवदेवपण्डितानां** पद्यानि ॥

१. आमलयमाहिमालयमामकरालयं धरावलयम्।
आस्ते व्याप्य कवीन्द्रो निजया कमनीयया कीर्त्या ॥ २८७ ॥

**तेषामेव**

१. विद्वांसो विश्वविद्या अपि विविधधियो लाघवं युक्तियुक्तम्
स्वीकृत्य स्वीयपक्षं गुणगणसरसं संगिरन्तेऽति[2] तुष्टाः।
अन्योन्यं गौरवेण प्रतिहतमिति ये सोपहासं त्यजन्ति
त्वत्तस्ते गौरवं स्वं सदसि समधिकं प्रार्थयन्ते कवीन्द्र ॥ २८८ ॥

**पुनर्भैय्याभट्टानाम्** ॥

१. धेनुर्मेऽनुत्तमा सा कनकगिरियुतः कल्पशाखी मतोऽल्पो
भोजो[3]ऽनोजस्क एवं बलिरपि न बली विक्रमो विक्रमी न।
कर्णोऽनाकर्णनीयो भवति तव पुरो दत्तवित्ताम्बुराशे
स्वस्ति श्रीमत्कवीन्द्र त्वमिह मिहिरवद्भाससे स्वप्रभावैः ॥२८९॥
२. नाना वागीशरम्या कविकुलकलिता मन्दमास्कन्दयन्ती
भास्वद्विभ्राजमाना द्विजपतिलसिता निस्तमस्का विकेतुः।
विस्फूर्जन्मङ्गलौघा विविधबुधयुता यत्सभा भूतलेऽस्मिन्
सोऽयं श्रीमत्कवीन्द्रो जगति विजयते[4] जाग्रदुग्रप्रतापः ॥२९०॥
३. कुन्दात्काशाच्च कोकात्कलिकलुषहरात्कोत्करात्कुण्डलीशात्
कौमुद्याः क्षीरवार्द्धेः करकनिकरा[5]च्छक्रकुम्भीन्द्रतोऽपि।

---

१. C om ख्यातौ. २. C संसरंतोऽपि. ३. AC मौजो°. ४. A विजयति.
५. AB °रिकरा°.

कर्पूरात्कामपालात्सितकमलचयाच्छ्रीकवीन्द्रस्य कामं
कैलासात्कामशत्रोरपि कलितकथाः कीर्तयः कौ लसन्ति ॥ २९१ ॥

४. शीलं नो परिशीलितं किल कलौ दानस्य दानं मुहु-
र्दृष्टं शौर्यमपि प्रवर्जितमथो लज्जा समुज्जासिता।
कौलीन्यं प्रविलीनमेव धरणौ चोद्धत्यमूद्धूनितं
शीलाद्यं सकलं विहाय सकलं श्रीमत्कवीन्द्रं श्रितम् ॥ २९२ ॥

५. श्रीमत्त्वं गुरुतां[1] कवित्वमपि च श्रीशङ्करत्वं तथा
शौर्यं च द्विजराजतां बुधगणेशत्वं शिवाकारताम्।
एकस्त्वं तु[2] वहस्यदोऽखिलमतश्चित्रं जनानां पुन-
र्नानात्रैव पवित्रचित्त[3]मपि नो यच्छ्रीकवीन्द्रः कृती ॥ २९३ ॥

६. शिवा भवतु भूतये स सविता वितीर्यात्प्रजाः
शिवो जनयताच्छिवं गणपतिः पतित्वं नृणाम्।
प्र[4]यच्छतु विचक्षणः क्षितिपते कवीन्द्राय ते (?)
हरिर्हरतु कल्मषं कलिभुवां[5] तवैवाख्यया ॥ २९४ ॥

७. मायूरीं मर्दयन्ती मृदुपदरचना न्यासतो भूतलेऽस्मिन्
चौरीं संचूर्णयन्ती सुरुचिररसभृत् सचमत्कारचर्वी।
माघं संघर्षयन्ती कविकुलजयिनी मां च रोमांचयन्ती
यद्वाणी भाति भूयस्त्रिभुवनभवनोद्दीपिका दीपिकेव ॥ २९५ ॥

८. समुद्रो[6]ऽयमद्रोहि कुम्भोद्भवश्रीः
समुद्रोप्यमुद्रोसि[7] मद्रोचयस्ते।
निर्जि[8]द्रोणसंग्रामनैपुण्यभूम्ना[9]
कृतद्रोणवर्णा[10]भंभूपालभूमन् (?) ॥ २९६ ॥

९. स्फुरद्रोमरुद्रोप[11]मस्फीतकीर्ते
लसद्रोहितांघ्रे भ्र( ग ? )लद्रोहितश्रीः।
चलद्रोहितांभोरुहद्रोहिने[12]त्र
समुद्रोपमस्त्वं समुद्रो वसेत्र[13] ॥ २९७ ॥

---

१. AC कवितां. २. C च for तु. ३. C om चित्त. ४. B प्रयन्तु. ५. C °भवं. ६. C समुद्रोप°. ७. C °मुद्रोस्ति. ८. B जित°. ९. B भूम्र, C भून्ना. १०. B वर्णारि. ११. C रुद्रोय°. १२. B °नेत्रः. १३. B च सेत्र, C वसेत्र.

१०. प्रभावतः परं प्रभो सदा शिवाप्रभावतः
परो हितोदयस्य ते भवेत्परो हितोदयः ॥ २९८ ॥

११. शुभं तव यशो भाति न यशो[1] भाति च क्षितौ।
तेजसः काः कथा(थाः?) कथ्या अयशस्ते खपुष्पवत् ॥ २९९ ॥

१२. साम्राज्यं प्राज्यमेवं क्षितिधरनृपतेः कन्यकाधन्यकाचित्
देयात्ते याचकाय प्रहरतु निखिलान्विघ्नहन्तैव[2] विघ्नान्।
मित्रो मित्रोदयं ते कलयतु सततं श्रीपतिः श्रीपतित्वं।
शत्रूणां भस्मभावं त्वरितमभिमतं कामशत्रुः करोतु ॥ ३०० ॥

१३. श्रीमत्कवीन्द्र नृपसम्भवदानवार्ता
विद्वत्सु शत्रुषु च तुल्यतरैव[3] भाति।
एकत्र भूरितरवारिनिपातयोगात्
गङ्गा[4] भवत्यपरतो[5] रुधिरौघसिन्धुः ॥ ३०१ ॥

१४. काशा न पूर्णा तव दर्शनेन काशा न पूर्णा यशसा तवैवम्[6]
काशाधिकाशा तव कीर्तिरेषा[7] काशाजुर्षस्ते[8] तव वैरिवर्गाः ॥ ३०२ ॥

१५. कीर्तिवल्ली मतल्ली ते मल्लीवल्लीव शोभते।
सुधाधवलवापीन्दुर्भाति पुष्पाणि भान्ति च ॥ ३०३ ॥

१६. बाणं बाणवदेव दिक्षु सगुणः क्षिप्रं क्षिपन् भ्राजते
कृष्णं चौरमुरारिदण्डिजयदेवाख्यं च नारायणम्।
दासत्वं लभते स कोऽपि सुभगः श्रीकालिदासः कविः
श्रीहर्षं च विहर्षयन् विजयते श्रीमत्कवीन्द्रः कृती ॥ ३०४ ॥

१७. श्रीमच्छ्रीभवभूतिभूतिमभितः प्रोद्भावयन् भूरिशः
श्रीमद्भारविभारतीमभिनवां गोवर्द्धनीं[9] वर्द्धयन्।
श्रीमन्मोहनपाठकं प्रमदयन् श्रीमत्कवीन्द्रः कृती
प्रोद्दामं दमयन् ध्रुवं श्रुतिधरानुद्धूनयन् भ्राजते ॥ ३०५ ॥

१८. भट्टं कृष्णबुधं तथा हरिहरं प्राभाकरं डिण्डिमं
श्रीरामं कविरत्नमण्डनमहावाणीविलासादिकम्।

---

१. B नृयशो. २. C °न्तेव. ३. C °परैव. ४. A मृङ्गा. ५. C योगावनत्यवरतो. ६. B तवैव. ७. C °रेका. ८. B° युज°, C° युष°. ९. A गो°.

रुद्रं किं च तथा च लक्ष्मणकविं पञ्चाननं वाहिनी-
पत्यन्तं[1] कविराजकेसरिमुखं विस्मापयन् भ्राजते ॥ ३०६ ॥

१९. यावच्चन्द्रो दिनेन्द्रो धरणिरपि धनेन्द्रो गिरीन्द्रो गजेन्द्रो
योगीन्द्रो[2] भात्युपेन्द्रो निभृतमथ फणीन्द्रो गणेन्द्रो[3] महीन्द्रः[4] ।
तावच्छ्रीमान्कवीन्द्रः क्षितिपतिविजयी जीवतादस्ततन्द्रो
मन्द्रोद्यत्कान्तिराशीभिरिह भुवि भृशं श्रीद्विजेन्द्रोदिताभिः ॥३०७॥

२०. यदीयरसनागृहे सकलशास्त्रनार्योऽनिशं
वसन्ति[5] विलसन्ति वा परिहसन्ति चान्द्रीः कलाः ।
विरोधमवधूय किं समवधूतदोषाः स्फुटं
प्रभूतपरमार्थकः[6] स कविवासवो भासते ॥ ३०८ ॥

२१. काणादे कणभुक् पतञ्जलिरसौ प्रायेण पातञ्जले
सांख्ये श्रीकपिलः किलेति कलितं लोकेन लोकोत्तरः ।
श्रीव्यासोऽप्यथ चैष जैमिनिमुनिर्वेदान्तमीमांसयो-
र्न्याये गौतम एवं[7] केवलमसौ श्रीमत्कवीन्द्रो यतिः ॥ ३०९ ॥

२२. जरीहर्ति जाड्यं जनानामजस्रं चरीकर्ति लोकेषु कारुण्यमुच्चैः ।
दरीस्थो हृदा संदरीधर्ति रुद्रं बरीभ(ऽव)र्ति विश्वं समन्तात्कवीन्द्रः[8]॥३१०

२३. जरीहर्त्यघं निर्जरीभावमाप्तश्चरीकर्ति कं स्वश्चरीस्तूयमानः ।
दरीस्थो हृदा संदरीधर्ति रुद्रं बरीभर्ति विश्वं समन्तात्[9] कवीन्द्रः॥३११॥

२४. समुद्योतते योऽनवद्योऽतिविद्यो[10]
विद्योत्तमं ब्रह्मविद्योत्तमश्रीः ।
सदा साध्यमानो[11]ऽथ विद्यावदाद्यो
निदाघो मुहुर्गद्यपद्यैः कवीन्द्रः ॥ ३१२ ॥

२५. प्रभावः केन वर्ण्या सा यत्प्रभावो न शक्यते ।
गिरा वक्तुं महाशक्तिं विरक्ततरसत्तमाः[12] (?) ॥ ३१३ ॥

---

१. A यत्यन्तं. २. B गौरीन्द्रो. ३. C महेन्द्रो. ४. B महेन्द्रः. ५. A लसन्ति.
६. AB °क्राः. ७. C पञ्च for एव. ८. B समेताद्यतीशः. C समन्ताद्यतीशः.
९. BC वरीयान्. १०. B सद्यो. ११. BC °साध°. १२. C °क्ति नरसत्तमाः.

२६. ब्रह्म यो वेद वेदान्तं तं वेदान्तं[1] विचिन्तये ।
काशीं[2] संकाशयन्नृणां शङ्काशतविनाशनः ॥ ३१४ ॥

२७. अदभ्रभ्रमाभ्रप्रविभ्रंशवातो महातोषकारी यतिः श्रीकवीन्द्रः ।
समानोऽखिलप्राणिषु भ्राजमानोऽभिमानोऽपि नो यस्य कस्तत्समानः ३१५

२८. कनिष्ठो ह्यसिष्ठो लघिष्ठो दविष्ठो महेन्द्रो महीन्द्रो मुनीन्द्रोऽप्यहीन्द्रः ।
यतः संयतः श्रीगुणीन्द्रो यतीन्द्रो वरीवर्ति सर्वोपरि श्रीकवीन्द्रः ॥३१६॥

कस्यापि

१. प्रशस्ताकृतिर्यः समस्तारिजेता कवीन्द्रः कवीन्द्रो मुनिव्रातनेता[3] ।
तपश्चर्यया यः स्वयं[4] स्वर्णरेता यतिर्भ्राजते[5] सन्मणिस्वच्छचेताः ॥ ३१७ ॥

२. गलन्मत्सरोऽलं परब्रह्मवेदी विदामत्रसन्देहसन्दोहभेदी ।
कवीन्द्रः[6] कृती भूरिभूभृच्छुभायां सभायां[7] स भूर्जम्भजेतुर्विभाति[8]॥३१८॥

३. सुवन्द्यो यतिर्गद्यपद्यादिहृद्याः प्रशस्ताः समस्ताश्च संपाद्य विद्याः ।
यशःपूरकर्पूरसान्द्रः कवीन्द्रः कलाभिः कलौ निर्मलाभिर्[9]विभाति ॥३१९॥

४. प्रजाते प्रभौ सानुगे सानुरागे करं दुःकरं देवयागे प्रयागे ।
सुचेताः शुचिः काञ्चनैर्मोचयित्वा वितन्द्रो मुनीन्द्रः कवीन्द्रो विभाति ॥

५. स्वकीयार्थमेकं समुद्दिश्य यत्नादनेके महान्तोऽपि ते ते यतन्ते ।
कवीन्द्रस्तु संप्राप्तपुण्यप्रशस्तिर्नृलोकेऽस्ति लोकोपकारार्थमेकः ॥३२१॥

६. दृढं योऽत्र दिल्लीपतिप्रीतिपात्रं मुहुः स्वर्द्धुनीस्नानसंशुद्धगात्रः ।
पवित्रः परित्रातसत्पात्रमात्रो[10] विनिद्रोऽस्ति संवित्समुद्रः कवीन्द्रः ॥३२२

७. सदा वन्द्यपादोऽविमुक्तास्थितानां गुरुर्यश्च पुण्ये पथि प्रस्थितानाम् ।
गुणप्रोल्लसत्सूक्ति[11]मुक्तासमुद्रश्चिदानन्दसान्द्रः कवीन्द्रश्चकास्ति ॥३२३॥

८. प्रयागागतस्नानपुण्याम्बुपूरैः समुत्पाद्य सत्कीर्तिवल्लीमतल्लीः[12] ।
पवित्रोरुगोत्रः सुरत्राणकारी सुरत्राणसंसत्[13]कवीन्द्रो विभाति ॥३२४॥

---

१. BC तं वै. २. AC काशी. ३. A °नेत्रा. ४. AB om स्त्रयं. ५. C यतो भ्राजते. ६. AC om कवीन्द्रः. ७. C add कवीन्द्र. after सभायां. ८. AC भूर्जं. ९. A om कलौ निर्मलाभिः. १०. A °मात्तो. ११. A omits सूक्तिमुक्ता to समुत्पाद्य in verse 324. १२. AC °तल्लों. १३. E सहान्दीन्द्र, C शहाद्धीन्द्र.

९. लसद्रसालंकृतिरुल्लसन्ती वसत्प्रसादा(द)रलीलयैव ।
वाणी कवीन्द्रस्य मुनेः कवीन्द्रशिरोमणेरेति शिरोमणित्वम् ॥३२५॥

१०. दैत्यारिसेवोपचितोचितश्रीः सुष्वाप[1] यो दक्षिणसन्मुखस्थः[2] ।
इनान्तिकेप्युत्कटकायकान्तिर्जीव्या(AC या)न् कवीन्द्रः कविरद्भुतो ऽयम् ॥३२६॥

एते रघुनाथभट्टगुर्जरस्य ॥[3]

---

१. सखाय यो. २. AC °मुकस्था. ३. B gives the following colophon (which is omitted in AC) and AC have 35 additional verses (see appendix) which are wanting in B. श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वती-कृतं कवीन्द्रचन्द्रोदयपुस्तकं कवीन्द्रचन्द्रोदयः ॥ लिःशावलदाशकाऐस्थ (कायस्थ) संवत् १७३४ सम्ये नाम फागुन सुदी दुइजीवारमङ्गलशुभमस्तुः ॥ यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥

# APPENDIX

The following verses are found in AC and are wanting in B.

यस्तावदृशकृत्व इत्यवतरद्धर्मो विलीयेत मा
स्वात्मानं विनियुक्तवानथ पुनस्तद्रक्षणायाधुना ।
त्वां सर्वोपकृतौ कवीन्द्र कृतवान् सत्यप्रतिज्ञं तथा
दौर्जन्यार्णवमग्नसज्जनसमुद्धाराय नारायणः ॥ १ ॥

श्रीकाशिका कापि पुरारिनायका
धन्येन येन त्रिजगत्प्रमोचिता ।
अमोचि यत्नाद्यवनेशदुष्करा(त्)
कवीन्द्रनामा स विराजतेतराम् ॥ २ ॥

नानात्वे सत्यनानात्वं येन निर्णीयते धिया ।
स चित्स्वरूपो जयति श्रीकवीन्द्रसरस्वती ॥ ३ ॥
एकोऽप्यनेकतामेति सद्विवेकसुरद्रुमः ।
कवीन्द्राशयसेकेन तं विना कं परं स्तुमः ॥ ४ ॥
बीजं स्पर्शसुखस्य यत्र परमं संबो(C यो)धनं सद्विधे
मुख्यं शब्दनिरूपकं शिवमयं लिङ्गं परं राजते ।
श्रीरूपं त्रितयं तदिन्द्रसहितं सत्यं[1] तुरीयास्पदम्
तन्नामात्र सरस्वतीवरयुतं श्रीधामजीयाच्चिरम् ॥ ५ ॥
नाकेशेनापि साकं गुरुगुरुपदभाक् दैवपाकाद्विनाकः
स्यान्निश्चेतुं समर्थो जगति वरमतिस्तत्कवीन्द्रं विना कः ।
येनासौ जीवलोकः सुखमनुभविता सद्गुणालंबिकस्त-
द्वन्दे सस्वरूपं (?) परमहममलं ज्ञानसंभाविना कः[2] ॥ ६ ॥
आनन्त्यं भजते न वस्तुगतिभिः सत्यप्रतीति पुन-
र्नानाकारमुपाधिभिः खलु निराकारां विकारायुताम् ।
श्रुत्या नेति च नेति वाङ्मनसयोर्गत्या न यन्निश्चितम्
तद्वन्दे परमात्मनः परिमितं रूपं कवीन्द्राश्रयम् ॥ ७ ॥

१. C. मन्यं for सत्यं. २. A om 6 cd.

यत्सर्वप्रतिभं विभाति विभवप्रारब्धभावं भवे
भावाभावविभावभावि भुवि यद्भव्यं मतं भावुकैः ।
अव्योम्नो विलसद्विलासममलं व्योमत्वमभ्येति यत्
तद्रूपं परमात्मनो मम मतं वन्दे कवीन्द्राश्रयम् ॥ ८ ॥
अन्तः सञ्चारचारी स्फुरति परिचर्या[1] चेतनाचेतनानाम्
[2]स्वाहंताचिन्त्यचिन्त[3]ासिचयपरिचिता[4]पञ्चपञ्चोपचारः ।
यस्यायं चित्प्रपञ्चः प्रचयविचयवान् सोचिराचारचारु-
स्तद्रूपं श्रीकवीन्द्रैः करबदरचितं के परेऽत्रोपचर्याः ॥ ९ ॥
सोऽहं विष्णुः शिवोऽहं विधिरहममरा एत इन्द्रोस्म्यमीषाम्
त्रैलोक्यं मत्कृते वः[5] कृतमपरमतः किं च के लोकपालाः ।
इत्थं माया यदीया[6] प्रतिघटमुदिता येन तन्निश्चितं ते
रूपं सत्यं स एव स्फुरति नतिरियं श्रीकवीन्द्राय तुभ्यम् ॥ १० ॥
संभाव्य ज्ञानदीपं भवभवनभवं वस्तुभाव्यं विभाव्या-
भावं सद्भावभानोरनुभवनभवत्स्वप्रभावप्रभावान् ।
आभात्य[7]द्वैतभावप्रभवविभववान् भावयन् भावनां स्वा-
मेको नैकेषु योऽसाविह जयति सदा कश्चिदाभासभानुः ॥ ११ ॥
दर्शं दर्शमजागतं भ्रममिमं[8] यो जागतं जागतं
स्पर्शं स्पर्शमिमां दशां दशदिशामीशित्वमीषाकरः ।
आधिव्याधिभवाभवैरिह मनो निर्विण्णतामाश्रयन् ।
जीवोपाधिमपाश्रयन्विजयतेऽनिद्रः कवीन्द्रो यतिः ॥ १२ ॥
नानाज्ञानपटावृतैर्विषयिभिर्निष्कारणैरिन्द्रियैः
पर्णैरप्यभिधीयते विषयिणां श्रीवासुदेवः प्रभुः ।
एष ब्रह्मसनातनः स पुरुषो धाता विधाता विभु-
र्व्यक्ताव्यक्तशरीरवान् विजयते श्रीमान्कवीन्द्रो यतिः ॥ १३ ॥
प्राणायामसमाधिचित्तनियमध्यानात्मसंधारणा-
ज्योतिः सूर्यविधुप्रभाप्रतिभया पश्यत्यपश्यन्निव ।

---

१. C °चया. २. C स्वातं. ३. A °चिन्त्या°. ४. C °चितः. ५. A मत्कृभेदः. ६. A दीयाः ७. A अमात्य°. ८. A °मियं.

संसारं गतसारमाकलयिता पञ्च प्रपञ्चान् परान्
पञ्चान्यैः सह पञ्चभिः स विषयैर्भिन्नश्चतुर्णां परः ॥१४॥
आविर्भावतिरोभवद्भवभवत्प्रज्ञाविजिज्ञासया
विज्ञानप्रतिभा विभाति सहसा ज्ञानस्वभावापहा ।
ना[1]नाभावविभावनानुभववित्सद्भावनाभावना
त्तज्ञा(ज्ज्ञा?)व्यक्त[2]रसज्ञ नैव तव सा सर्वासनावासना ॥ १५ ॥
योऽहंकाररिपुः सदा निजकुलालंकारभूतः कृती
मोहद्रोहकरः परोपकृतये पुण्यार्थसन्दोहकृत् ।
सोऽहं सोहमिति प्रबोधपटुवाक् सत्यं प्ररोहांकुरो
निःसंकल्पविकल्पको विजयते श्रीमान्कवीन्द्रः प्रभुः ॥१६॥
निःसन्देहा विदेहा विदधति परितः स्वप्रकाशं समेहा
मुक्तस्नेहाः सुखेहाविकलितकलना रत्नदीपोपमेहाः ।
नेहामुत्राप्यपेहा[3]ः सहृदयहृदयाने[4]हगेहा जितेहा
निस्तन्द्राः श्रीकवीन्द्रा विनयनयदशाव्याप्तसंसारगेहाः ॥ १७ ॥
आधारस्त्वं धरायाः धरणिधरधृति[5]र्धारणादौ समाधौ[6]
ध्यानध्येयैकसिद्धो विधिविविधविधीनादधानोऽनुपाधिः ।
साध्यासाध्यावि[7]धिज्ञो निरवधिधनदो निर्धनानां स जीया
द्दीह्लीपप्रीतिकारी विबुधवरविधुप्रीतिधारी कवीन्द्रः ॥ १८ ॥
कीर्तिः श्रीवाक्प्रभाभिर्जितहिमकिरणश्रीदजीवारुणाद्या
नीवारान्नाद्यपीवाकृतिगतिमतयो नैरमीवाश्रयार्थाः ।
सुश्रीवाधीशबद्धाशयनयविनयश्रीकवीन्द्रा नवीयो
यूयं संमा[10]नंजीवा वयमथ भवतां दानजीवा भवामः ॥ १९ ॥
आहेमाचलमाहिमाचलमथालोकापलोकाचलम्
सप्तद्वीपवतीं तथा वसुमतीमासप्तरत्नाकरान् ।
शौर्यौदार्यमनस्विता न कविता दानादिशक्तिः श्रुता
दृष्टान्यत्र कवीन्द्र शास्ति भवतां काश्मीररत्नाकरैः ॥ २० ॥

---

१. C ज्ञाना°. २. C °व्यत्त°. ३. C °देहाः. ४. C °वेह. ५. C °भृति°.
६. C समायौ. ७. A विधिज्ञो. ८. C ध्यान°. ९. C नमी वा. १०. A सन्मान°.

अथ समस्या ।

त्वं तीर्थीकुरुषे जनान् गुणिजना गायन्ति युष्मद्यशो
धीवाधारकरो भवान् गुणवतां धर्माग्रवर्ती सदा ।
त्वं दातासि कलौ कवीन्द्र नितरां संसारवारां निधौ
काशीवत्कलकण्ठवत्कमलवत्कर्णारिवत्कर्णवत् ॥ २१ ॥

सम्राच्छासनमाबिभर्त्ति भवतस्त्वं रासि[१] सञ्ज्ञान्निजम्
सारूप्यं हरिचन्दनैः सुरभितं श्रीमद्वपू राजते ।
दानस्निग्धकरोऽसि नृत्यति गुणस्तेऽग्रे[२] कवीन्द्रे[३] प्रभो
मालावन्मलयाद्रिवन्मलयवन्मल्लेभवन्मल्लवन् ॥२२॥

त्वं सर्वं क्षमसे तमः परिहरन् श्रीमान् सदा राजसे
वृन्दैः[४] सौमनसैर्यशोऽतिधवलं व्याप्नोति दैवं जगत् ।
हंसैरत्र वियोज्यते जडपरामर्शात्कवीन्द्र प्रभो
क्षोणीवत्क्षणदेशवत् क्षितिजवत् क्षीरोदवत्क्षीरवत् ॥२३॥

निःसंख्या भवतां गुणा निरुपमा कीर्तिः सदा वर्धते
संसारार्णवतारको मुनिसभामध्येऽसि सूतापहा ।
औन्नत्यं भजसे मुदैव गुणिनां श्रीमत्कवीन्द्र प्रभो
तारावत्तरुणोडुवत्तरणिवत्तालाङ्कवत्तालवत् ॥ २४ ॥

विश्वाज्ञानतमोहरः परनृपान् संमोहयन् सर्वशः
पृथ्वीं पात्यखिलाममोहमनसा कामाकृतिद्रोहवत् ।
जीयात्सत्फलदः सदैव विजयी दारासुकोहश्चिरम्[६]
भास्वद्वद्भृगुसूनुवद्भरतवद्भर्गाक्षिवद्भार्गवत् ॥ २५ ॥

कीर्तिस्ते नरिनर्ति शक्रपुरतः पीयूषपूरश्रवा[७]
त्वं दातासि[८] भवत्प्रतापतपनोल्लासाद्विकासावहा[९] ।
साधूनां वदनावलीचिदमलो[१०] भासे कवीन्द्राधुना
रम्भावद्रजनीशवद्रविजवद्राजीववद्रामवत् ॥ २६ ॥

---

१. A °राशि°. २. C ये for °ग्रे. ३. A कवीन्द्रा. ४. A वंदैः for वृन्दैः. ५. A °त्तरुणेन्दु°. ६. A श्रीमत्कवीन्द्रश्चिरं. ७. C °पूरस्त्रवा. ८. C °सा° for °ता°. ९. A °काशाद्वहा. १०. C वि°.

त्वल्लक्ष्मीः फलदायिनी सुमनसां श्रीमद्गभीरं मनो
भावत्कं[1] गुणि जीवनं तव यशोऽन्येषामसारं तु तत् ।
आदत्तं भवता शुभं प्रभवता श्रीमत्कवीन्द्र प्रभो
सीतावत्सरिदीशवत्सलिलवत्संसारवत्सारवत् ॥ २७ ॥

कारुण्यक्षीरराशिः कलिकृतकलनाकोपेतः[2] कल्पशाखी
निःसङ्कल्पो विकल्पप्रकृतिरविकृतिः प्राकृतव्याकृतिज्ञः ।
संसाराम्भोधिमग्ने कृपणनृपजने कर्णधारः कवीन्द्रः[3]
श्रीमद्दिल्लीपतीष्टो जयति कलिरिपू **रत्नशर्मा**दराय ॥ २८ ॥

बलं निर्बलानां स्थलं चास्थलाना-
मलं सत्कवीनामलङ्कारदाता ।
कुलालङ्कृतिस्त्वं खलाकालकाल-
स्त्वदालम्ब आलभ्यतां **रत्नशर्मा** ॥ २९ ॥

स्फुरच्चारुभालः सुखश्रीविशाल-
श्रितक्षोणिपालः[4] सदाशालवालः ।
उरःस्वर्णमालः सुरेन्द्रावतारः
कवीन्द्रो यतीन्द्रश्चिरं कालमास्व ॥ ३० ॥

मुक्तिदा श्रीमता युक्तिर्युक्तितो युक्तिदा सती ।
दुर्वर्णभ्रान्तिदानुक्तिः शुक्तिवत्सा परोदिता ॥ ३१ ॥
गर्वो वर्गत्वमायातो मोहो होमत्वमागतः ।
कवीन्द्र तव संसर्गान्मदेनापि दमायितम् ॥ ३२ ॥

अन्तः सन्तोषतोषो हसति रतिगतीः[5] जाग्रतीर्जाग्रतीर्यैः[6]
सौवाप्नीरेव[7] पश्यन् जनक इव पुनः किं नु[8] रामः शुकः किम् ।
किं वा व्यासः सदासौ परमशमसुखास्वादवेत्ताधिरूढः[9]
सौषुप्तिं चित्स्वरूपो जयति मुनिवरः श्रीयतीन्द्रः कवीन्द्रः ॥ ३३ ॥

---

१. A भावात्कं. २. A को पुनः. ३. A कवीन्द्र. ४. A श्रोणिपाल.. ५. A °गती. ६. A जाग्रतीयः. ७. C सै°. ८. A तु for नु. ९. A °पिरूढः.

[1]श्रीमत्कवीन्द्रकक्षणमपि तरुणायते यत्र । (?)
परिहृतहरिहृत्कमला निवसति कमला गृहे तस्य ॥ ३४ ॥

कस्यापि

कति न कवयितारः स्वार्थतत्त्वावितारः
परगुणगणनाया बाधितारः कियन्तः ।
इति मनसि विदित्वाऽकारि विश्वार्तिहन्त्रा
सकलसुकृतसारः श्रीकवीन्द्रावतारः ॥ ३५ ॥
श्रीकवीन्द्रयशोवृन्दैरिन्दुरेष तृणीकृतः ।
अन्यथा कथमत्रास्ति सन्ततं हरिणीपतिः ॥ ॥ श्रीः ॥

१. C omits verses 34-36.

# PRATĪKA INDEX TO KAVĪNDRACANDRODAYA

*N.B.*—The references are to verse-numbers


अज्ञानतश्चावरणं २१८
अतिचतुरकला २५९
अत्यादराध्ययनं ७०
अद्धंगे जस्स गोरी १५०
अदभ्रभ्रमाभ्र ३१५
अधिगतनृपमानः १५४
अमुना कवीन्द्रनाम्ना १८०
अमुना चिन्तितविभुना १५
अम्भोजं श्रीनिवासे ६४
अम्भोधितनयाम्भोज १९६
अर्थं चाभीष्टहेतुं १०१
अवद्यजम्बाल १०४
अवनिपकुलदीपे १६४
अशेषवेदार्थविशेष १८
अष्टादश पुराणज्ञो ११
अष्टादश पुराणानि १७५
अष्टादशसु विद्यासु १२१
आचार्याचार्यहंसानां १२७
आन्वीक्षिक्यच्छरत्ना- २०२
आमलयमाहिमालय २८७
आसत्तिमाधुर्यविभङ्ग १८८
आस्ते कोऽप्यवनीतले १४१
आस्ते मन्मत ६०
इन्द्राधिकान् द्विजांश्चक्रे १९३
इन्द्रानन्दसरस्वत्या २६
उच्चैर्दशावानपि १६३
उदयाचलचरमाचल २४९
उमेन्द्रं च केचित् १०९
उमेन्द्रं रमेन्द्रं ५५
क ईदृग्दाताभूत् ३७
कणादो जैमिनिर्व्यासः १२०
कनिष्ठो हूसिष्ठो ३१६
कमनीये भवेद्रामः १२४
करस्य मोचनं यस्मात् ११४
करितुरगसमूहे ५८
कर्णादयो वितरण ३६
कर्पूराभा कराभा —on
कर्मन्दिनामिव १६१
कलौ युगे किलायाते १९२
कल्पान्तः करणप्रकाश १९८
कल्याणप्रसरोऽस्तु २६७
कवयः शतशः सन्ति १०६
कविकर्मधारयोऽयं ६९
कविकुमुदवनी २२८
कवीन्द्र त्वद्गुणान्वक्तुं २८२
कवीन्द्र पृथ्वीन्द्र ९२
कवीन्द्रभूषणं ८१
कवीन्द्र विज्ञप्तिरियं २१९
कवीन्द्रशर्मणा शर्म १७
कवीन्द्रस्वामिनां नाम ११९
,, ,, ,, १२२
काणादे कणभुक् २०४
,, ,, ३०९
का त्वं प्रेयसि ? ८७
कान्तो मुख्यप्रकार १५९
कामाक्षप्रथम ११८
कालेनोन्मूलितः प्राक् २०
कालोऽयं मृगयुः १९५
काशा न पूर्णा ३०२

काशीन्द्रश्रित्फणीन्द्र ३१
काश्मीरैराकचारः १७०
काश्यां श्रीकोशलायां २२३
कासारः किमु सर्वतः १५५
किं नो सन्ति सहस्रशो २२
किमधिकमधिकज्ञे ३५
कीर्तिवल्ली मतल्ली ते ३०३
केचित्काञ्चनवाञ्छया १४५
कुन्दात्काशाच्च कोकात् २९१
केचिद्वेदविदग्रणीषु १३८
कोविदव्रातकुमुद १२९
क्वचिद्बुद्धिगर्वः २००

खद्योता मिहिरन्ति २२४

गलद्दानोदककरः ८०
गलन्मत्सरोऽलं ३१८
गाम्भीर्यं जलधेः ४६
गायति गोपीनाथं ९५
गीयन्ते कीर्त्तयस्ते २२२
गुणच्छटापटाच्छन्न १३५
गुणा द्रव्याण्याश्रयन्ते १०५
गोदातीरनिवासी ४
गृहे गृहे वै गुरवोऽत्र २१४

घनघनवसनान्ते २५८

चक्रेण मोचयांचक्रे १०३
चतुर्णामपि वर्णानाम् १३
चतुर्वेदीविदां श्रेष्ठः १७४
चन्द्रं चापि चकोरका ३३
चित्ते चकोरी २६६
चिन्ताप्रतानपरिचुम्बित १३९
जरीहर्त्ति जाड्यं २५
,, ,, ३१०
जरीहर्त्यघं ३११
जाताः स्वोदरपूरकाः ५४
जोह्लाचन्दणअंगरा १५२

टीकाकारोऽपि नारोहति २०९

तत्कृतं यन्न केनापि ९३
तत्तच्छास्त्रप्रमेय ३८
तत्तत्संसारसारा २९
तन्द्रालु कां दिसतसे २५१
तमस्तमःसंघविघातकारी २
तर्के प्रोद्दामतर्कः २७१
तस्यैते चरणारविन्द १५८
तीक्ष्णतुण्डाः श्लक्ष्णदण्डाः २०८
तीर्थराजस्य काश्याश्च २८५
तुजविण मज पाहे २५५
तूझ्यानि साम्ये २५७
तेजोनिधिस्त्वमसि ९४
त्वं बुद्ध्या गुरुरंशुभिः १७३
त्वं बुद्ध्या धिषणोंऽशुभिः १९४
त्वं विद्याम्बुधि १८९
त्वत्कीर्तिकर्पूर २८१
त्वद्दामोद्दामनीरी २२६
त्वद्वक्त्रोत्थकवित्व १७१

दण्डिनामवधूतानां १७७
दधीचिबलिकर्णादि १३६
दयादानसविज्ञान १४
दयाशीलसन्तोष १७९
दानाधानविरागयोग २१
दानीं कल्परुहासमान २५३
दानेनालिप्तकल्प १४६
दाने राज्ये गवि क्षान्तौ १७२
दिक्कालयोर्व्योम्नि २१६

दिक्पालाः स्वसमीहितं ५९
दिल्लीश्वराय निगमागम ११५
दीनद्विजातिदारुण २०१
दुष्टाशीविषहन्ता ४३
दृढं योऽत्र दिल्लीपति– ३२२
देतसे कविवरासि मोहरा २६१
दैत्यारि सेवोप– ३२६
दैन्यध्वान्तमुदस्य ४१
द्राक्षातिरूक्षाक्षर ६७

धरायां गुणाढ्यः २३७
धर्मं धर्मधनं २७५
धर्मद्रुमः किल निदाघ ८२
धर्मे धर्मसुतो ४८
धीराधीशकवीन्द्र २७०
धेनुर्मेऽनुत्तमा सा २८९
धैर्याकूपारसीमा १४२

नमन्महीशमुकुट १३२
नरीनर्ति तर्को ५६
न स्फोटो न खलु २७७
नस्त्वागंतुकबाधकाः २७४
नाकर्णि कश्चिन्निरवर्णि ४०
नानावागीशरम्या २९०
नाप्राप्तप्रापणार्थं २७६
निखिलभुवनधाम ११२
नित्यानन्दातिदाभ २०५
निर्धनं निर्गुणं ६१
निःस्पृहता विषयेभ्यः ५

नीचीकृत्य मुकुन्दः १६१
नूनं शास्त्रसमुद्रोऽयं १९०
नो देवेषु न वासुरेषु ९७
नो भूम्यादि चतुष्टयं ६२
न्यायज्ञोऽपि न संशयं १९७

पद्माश्रयः सततशोण– २३०
परोपकृतिसाहसी १४०
पर्याय हा होय २५२
पहुवीअलएक्क १४८
पाण्डित्यं जगतीतले ९९
पाण्डित्यदण्डितोद्दण्ड १३०
पावमानं हविर्ग्राह्यं ७१
पीयूषद्रवसारिणीव २६०
पुण्डरीकाक्षचण्डांशू १
पुरी मस्तके भारती ११७
पृथ्वीशार्ककरेण ६३
प्रकाशापुरीवासि १६७
प्रकाशीकृताऽतीव २४
प्रजाते प्रभौ ३२०
प्रतापतपनः परं २६२
प्रपञ्चे निर्वेदी २३
प्रबले सकले जाते २६८
प्रभावतः परं प्रभो २९८
प्रभावः कत वर्ण्यो सा ३१३
प्रयागागतस्नान ३२४
प्रशस्ताकृतिर्यः ३१७
प्रामाण्यं परतः स्वतोऽपि ८८
प्रामाण्यं वचनेषु ८९
प्रविततसुयशाः २३८
प्रविततसुयशाः २४५
प्राचामिवकविवाचां p. n
प्राची शचीसहचरेण २६४
प्रालेयाचलमेव ८५

बलिरथ च दधीचि ९६
बाणं बाणवदेव ३०४
बुद्धा विबुधाधिकतां ७
ब्रह्माद्वैतविभावना ५३

ब्रह्म यो वेद वेदान्तं ३१४
ब्रह्मेन्द्र पूर्णेन्द्र १७८
ब्राह्मणानां क्षत्रियाणां १७६
ब्राह्मणे द्रुतमसोढ ७५
ब्रूमः कथं तव ४५

भट्टं कृष्णबुधं ३०६
भट्टो नारायणः साक्षात् १२३
भट्टो भाट्टनये २०३
भूस्त्वन्तिः सन् २४०
भ्रान्तेः पुरुषधर्मत्वाद् १२८

मायूरीं मर्दयन्ती २९५
मित्रो मित्रोदयं ते ३००
मीमांसाश्रुतिमौलि ८४
मुक्तास्तु तारा २२७
मोदश्रीमान् २४१
मोदस्वारं धरायां २३१
मोदस्वारं प्रविततसुयशाः २३४
मोदस्वारं वितत २३२
मोदस्वारं विततसुयशाः २३५
मोदस्वारं श्रीमान् २३६
मोदस्वारं स भूः २४७
मोदस्वारं सर्वसंपत्तिधूर्भूः २३३
म्लायद्विद्याम्बुजाली ३०

यं पद्मनाभोऽपि १६२
यज्ज्योत्स्नाप्रसरेण २२९
यत्तत्त्वमस्या २१७
यत्पाण्डित्यपराभवा ९०
यत्पार्श्वे श्रुतिशास्त्र ११३
यथा स सर्वोपरि २७
यदा लोके लोके १४३
यदीयरसनागृहे ३०८
यदुक्तं भवद्भिः २२१
यद्दानानेकरूपाः १८५
यद्रोमकूपेषु हि २१५
यद्वाणी बाणवाणी ३४
यवनकरग्रहदुःखात् २१०
यशसामन्यनृपाणां २२५
यशः पारावारः १४४
यशःपूरकर्पूर १०७
यस्य वाक्यं विधिः ७२
यस्य वासेन सर्वस्य १८१
यः पठेत्स्पष्टमुत्कृष्टं १३७
यः साक्षात् गजराज ११६
यः कालिदासादि १८३
याति द्राक् स्थिरतां १६८
यावच्चन्द्रो दिनेन्द्रो ३०७
या विद्या प्रौढविद्या १८४
येन श्रीसाहिजाहाँ १६९
येनाखिलस्य जगतो २२०
येनामोचि महीन्द्र १८२
येनावनीशकर्णे २६५
येषां दया ब्राह्मणभूम्नि ७३
ये सन्तः पृथगाश्रयाः २७३
योगीन्द्राः क्षोणिपालाः ४९

रम्यो हरंस्तम उदेति १६५
राज्ञः कराद्ब्रह्मकुलस्य ७६
रूपे दस्रसमः ७८

लघुवयसा गततमसा ६
लसद्रसालंकृति ३२५
लोकानां प्रतिवस्तु ४४

वक्त्राम्भोजं सरस्व- ४२
वर्णी न मी तूज १५३

| | |
|---|---|
| वाङ्माधुरीरसवशी | ५२ |
| वाडवार्त्यब्धिवडव | १३३ |
| वाणीशा यस्य वाण्यां | २८० |
| वाराणसी प्रयागा | २८४ |
| वाराणस्यां प्रयागा- | २८३ |
| वाल्मीकिः प्रथमं | २६९ |
| विचार्याचार्यसादृश्यं | १६ |
| विततसुयशा | २४३ |
| विदितमहीतलतस्मै | ८ |
| विद्यानिधानकृतमान | ३९ |
| विद्यानुकृतफणीन्द्रो | ३ |
| विद्या श्रीः कीर्तितुष्टी | ६५ |
| विद्वद्वर्य विभो | २७२ |
| विद्वद्वृन्दकरीन्द्र– | ९८ |
| विद्वद्वृन्दविभूषणः | १९ |
| विद्वन्नैवोपमा ते | २७९ |
| विद्वांसो विश्वविद्या | २८८ |
| विधाय वेषवैषम्यं | १०२ |
| वृथा मधुकथा प्रथा | २१२ |
| वेदात्माङ्गतनुः | ५० |
| वेदान्ता हृदयङ्गमा | ५७ |
| वेदान्ते व्यासरूपं | २१३ |
| वैयाकरणकुम्भीन्द्र | १०० |
| वैरूप्यं नरभाल | २७ |
| | |
| शशौ शरभूवह्नि | २४८ |
| शिवा भवतु भूतये | २९४ |
| शीलं नो परिशीलितं | २९२ |
| शुभं तव यशो | २९९ |
| शेषाशेषस्य काकोलात् | १०८ |
| श्रीकवीन्द्र महाराज | ७७ |
| श्रीकवीन्द्रयशो भाति | २०६ |
| श्रीकामधेनु जगतीवरि | २५६ |

| | |
|---|---|
| श्रीकृष्णं व्रज सुन्दरीव | १११ |
| श्रीखण्डपुण्डरीकेन्दु | १३४ |
| श्रीमच्छ्रीभवभूति | ३०५ |
| श्रीमत्कवीन्द्रनृप– | ३०१ |
| श्रीमत्काशिविकाशिभिः | ९ |
| श्रीमत्वं गुरुतां | २९३ |
| श्रीमद्धन्यकवीन्द्र | १६० |
| श्रुतिसागरवार | १४७ |
| श्रूयन्ते सखि यस्य | ८३ |
| श्रेयः कुर्युः क्रियन्नाम | २८६ |
| | |
| सच्चं कासि तुमं | १५१ |
| सदलंकारविख्यातं | १९९ |
| सदाचरणचातुरी | २६३ |
| सदाचारचारी | १८६ |
| सदा वन्द्यपादो | ३२३ |
| सदाश्रितं यूयमवेत | ७४ |
| सह्याद्रिघाटवी | १३१ |
| समुद्योतते योऽन– | ३१२ |
| समुद्रोयनद्रोहि | २९६ |
| सर्वसंकौतुकी | २४४ |
| सर्वसंपत्तिधूः | २३९ |
| सर्वार्थः सर्वदेवासो | २७८ |
| सर्वोपकृतये विद्या | १२६ |
| सलिलनिधिकूपेचा | २५४ |
| स षडङ्गचतुर्वेद | १० |
| साष्टाङ्गं समहामहं | ३२ |
| साहित्योपेतसौहित्यो | १२ |
| सुधा भवति सा सुधा | २११ |
| सुपत्राढ्यो द्विजिह्वारि | ७९ |
| सुरेन्द्रैः स्तुतो | १८७ |
| सुरेन्द्रोऽपि निद्रा | १५७ |
| सुवन्द्यो यतिर्गद्य | ३१९ |

सौन्दर्येण विनिर्जितो ९१
स्फुरद्रोमरुद्रोप २९७
स्वकीयार्थमेकं ३२१
स्वकुलकमलभानु ५१
स्वयमिह सुदर्शा २०७
स्वर्गे कल्पमहीरुहो ८६
स्वस्ति श्रीनृपसाहजाह १५६
स्वस्ति श्रीमदमन्द- ११०
स्वस्ति श्रीमद्विशिष्ट २८
स्वामिश्रीमत्कवीन्द्रे ६६
स्वारं धरायां २४६
स्वारं धीमान् २४२
स्वार्थातिक्रमवर्तिनो ६८
हत्थो दे पहुवीअले १४९
हनूमान् भवनाशाय १२५
हारं न तारं २५०
हृदयलसदुपेन्द्रं १६६

## PRATĪKA INDEX TO APPENDIX

अन्तः संचारचारी ९
अन्तः सन्तोषतोषो ३३
आधारस्त्वं धरायाः १८
आनन्त्यं भजते ७
आविर्भावतिरोभवत् १५
आहेमाचलमाहिमा २०
एकोऽप्यनेकतामेति ४
कति न कवयितारः ३५
कारुण्यक्षीरराशिः २८
कीर्त्तिस्ते नरिनर्त्ति २६
कीर्त्तिः श्रीवाक्प्रभाभिः १९
गर्वो वर्गत्वमायातो ३२
त्वं तीर्थीकुरुषे २१
त्वं सर्वं क्षमसे २३
त्वल्लक्ष्मीः फलदायिनी २७
दृशं दर्शमजागतं १२
नाकेशो नापिसाकं ६
नानाज्ञानपरावृतेः १३
नानात्वे सत्यनानात्वं ३
निःसंख्या भवतां २४
निःसन्देहा विदेहा १७
प्राणायामसमाधि १४
बलं निर्बलानां २९
बीजं स्पर्शसुखस्य ५
मुक्तिदा श्रीमता युक्ति ३१
यत्सर्वं प्रतिभं ८
यस्तावद्दशकृत्य १
योऽहंकाररिपुः १६
विश्वाज्ञानतमोहरः २५
श्रीकवीन्द्रयशोवृन्दैः २६
श्रीकाशिका कापि २
श्रीमत्कवीन्द्रकक्षण ३४
संभाव्यं ज्ञानदीपं ११
सम्राट्छासनमाबिभर्ति २२
सोऽहं विष्णुः शिवोऽहं १०
स्फुरच्चारुभालः ३०

## कथावस्तुसंक्षेपः ।

अगाधसत्त्वो धीरोद्धतचरित्रः पाण्डवमध्यमो भीमसेनः सौगन्धिकपुष्पाहरणरूपं याज्ञसेन्याः प्रियं कर्तुकामः, कुलाचलान्यतमं गन्धमादनं प्राप्य एकस्मिन्नचलोद्देशे मृगकुलाकीर्णे रमणीयवस्तुविषयाणां वनान्तराणामनन्ततां मनसि चिन्तयन्, सौगन्धिकगन्धमावहन्तं जलाशयमेकमपश्यत्, उपसृत्य च पुष्पाण्यवचिचाय यदा तदालकेश्वरस्य सरस्सारभूतसौगन्धिकापहरणसमुद्दीपितक्रोधं सरोरक्षिणं व्यापादयितुमुद्युक्तं राक्षसं, विगीतैर्वचनैः परुषितमुखरागो भीमसेनः गदयावरुग्णकलेबरं कान्दिशीकं चकार ।

अवचितैश्च कुसुमैः प्रतिनिवृत्तः आभिरामिकगुणपूर्णस्य नगवनोद्देशस्य परितःस्थितिं प्रलोकयन् कदळीवनस्यैकस्य मानशृङ्गमुत्पाटयति स्म, धाष्टर्यं कर्म चैतन्निर्वृत्तं दृष्ट्वा कदलीवनस्य स्वामी जरद्वानरेन्द्रः प्रवृद्धामर्षः 'स्वाज्ञामुल्लंघ्यास्माद्विषयाद् गन्तुं न शक्यत' इति तं रुरोध । नागायुतबलपराक्रमप्रभावो भीमः कथमपि पुरःस्थं निरुद्धगमनमार्गं कपीश्वरमुत्कम्पयितुमशक्तः । अथ च तयोस्तुमुलं मुष्टियुद्धं प्रववृते ।

एतस्मिन्नन्तरे शक्रशासनेन मारुतसून्वोरेतयोः भ्रातृत्वावबोधनरूपं कल्याणं कर्त्तुमुपदिष्टः प्रियया गुणमञ्जर्या सहितो विद्याधरः अवनिचक्रमवतीर्य अतिसाहसादेतौ निवार्य अनवगतपरस्परभ्रातृभावयोस्तयोः साहोदर्यं व्यजिज्ञपत् । विदितार्थभावो भीमश्च हनुमद्दर्शनात् प्रहृष्टस्वान्तः प्रणम्य चैनं प्रियं प्रियाया विधातुं प्रययौ ॥

# पात्राणि ।



भीमः—कथानायकः ।

तापसः—भीमं सौगन्धिकपुष्पाहरणरूपादतिसाहसात्कर्मणो निवर्त्तयितुमागतः ।

ब्राह्मणी—तापसस्य कळत्रम् ।

राक्षसः—अळकेश्वरस्य सरोरक्षी क्रोधवशो नाम ।

हनुमान्—भीमाग्रजो मारुतिः ।

विद्याधरः—पुरन्दरस्य नियोगकारी हनुमद्भीमयोः सौभ्रात्रमवबोधयितुमभ्यागतः कल्याणको नाम्ना ।

गुणमञ्जरी—विद्याधरस्य सहधर्म्मचारिणी ।

श्रीगणेशायनमः । अविघ्नमस्तु ॥

# कल्याणसौगन्धिकम्.

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

आसीद्यः स्वनिवासशैलतुलनात् प्रीतः प्रसादोन्मुखो
लङ्केशस्य ससम्भ्रमाचलसुतासंश्लेषसौख्यप्रदात् ।
हव्यं यस्य शरोद्भवे हुतवहे जातं पुराणं त्रयं
सोयं मुग्धशशाङ्कमण्डितजटाभारो हरः पातु वः ॥

( नेपथ्या[1]भिमुखमवलोक्य )

आर्ये ! इतस्तावत् ।

( प्रविश्य )

नटी—अअ इंआह्मि ।

सूत्र—अहं[2] खल्वार्यमिश्रैरादिष्टः ।

नटी—कहं विअ आदेसाणुग्गहो अंअमिस्साणम् ।

[ कथमिवादेशानुग्रह आर्यमिश्राणाम् । ]

सूत्र[3]—

आज्ञागुणेन गुणवद्भिरभिष्टुतानां
कात्यायनीचरणपङ्कजभक्तिभाजाम् ।
षट्कर्म्मिणां निवसतौ परमाग्रहारे
प्राप्तप्रसूतिरुपसेवितवान् गुरु[4]र्नः ॥

तदस्य नीलकण्ठना[5]म्नः कल्याणसौगन्धिकं नाम निबन्धनशरीरमिदमभिनयालङ्कारालङ्कृतमनुसन्दर्शयेति ।

---

पाठान्तराणि—(१) 'परिक्रम्य ने' ख. (२) 'आर्ये अद्याऽमार्य' ग. (३) 'सूत्र—(सहर्षं) आर्ये श्रयतां' आज्ञेत्यादि ग. (४) 'कविर्नः' ख. ग. (वाग्गुरुर्नः ?) घ. (५) 'नामधेयस्य क' ग.

नटी-अज्ज सुद्दअप्पहुदीणं[1] महाकवीणं णिबन्धणाणि मोत्तूण कहं[2] एदस्स पओअदंसणे[3] अज्जमिस्साणं पवेसो। [आर्य शूद्रकप्रभृतीनां महाकवीनां निबन्धनानि मुक्त्वा कथमेतस्य प्रयोगदर्शने आर्यमिश्राणां प्रवेशः]

सूत्र-आर्ये आश्रितवात्सल्यव्यसनी ननु सज्जनसमूहः। अपि च,

विद्यानामतिचिरसंस्तवैकदोषाद्
मुक्तानां बहुगुणतामचिन्तयित्वा ।
भोग्यानां समुपनतौ नवोदयानां
सर्वोऽपि[4] प्रमुदमुपैति जीवलोकः ॥

नटी- जुज्जइ। (युज्यते,)

सूत्र-तदिह[5] सज्जीभव। अहमपि नेपथ्यविधानमनुतिष्ठामि। (परिक्रम्य कर्णं दत्वा) अये किन्नु खलु मयि सज्जननियोगानुष्ठानव्यग्रे शब्द इव श्रूयते। अङ्ग ? पश्यामि।

(नेपथ्ये)

भीम न खलु न खलु गन्तव्यम्। ब्राह्मणि एह्येहि।

सूत्र- भवतु। विज्ञातम्।

अगाग्रादप्राप्यं मरुदु[6]पहृतं दिव्यकुसुमं
गुणाढ्यं पश्यन्त्या द्विगुणितमुदा नूतनतया।
बहूनीच्छामीति द्रुपदसुतया भीममुदितं
प्रयान्तं संरोद्धुं व्रजति सकलत्रो मुनिवरः ॥

(१) 'दीणं णि' ख. घ (२) 'कहिं' ग. (३) 'दस्सणेण आवेसो' ग. (४) 'वों हि प्र' (५) 'सज्जीभव तदिहाहमपि' ग. (६) 'रुद्प' ख. (रुमुप ?) ग.

( निष्क्रान्तौ )

## स्थापना.

( ततः प्रविशति सकल[1]त्रस्तापसः )

तापसः—[2]भीम न खलु न खलु गन्तव्यम् । ब्राह्मणि एह्येहि ।

पादौ मे नयने च निर्झरजलैरभ्यु[3]द्वय वक्षः शनैः
स्पृष्ट्वा[4] कम्पितदुर्बलं भुजयुगं संवाहयामूलतः ।
पार्श्वे श्वासविकम्पिते धमनिभिः स्पष्टास्थिसंवेष्टिते
मुग्धे पीडय मन्दमन्दमसकृद् द्वाभ्यां[5] कराभ्यामिमे ॥

ब्राह्मणी—एत्तिअम्मत्तो[6] मग्गो, काणाम[7] वेदणा ।
( एतावन्मात्रो मार्गः, का नाम वेदना । )

तापसः—मुग्धे जराभिभू[8]तानां प्राणिनां प्राणधारणमपि महा[9]-प्रयासः । किं पुनरपरे[10]चेष्टितानि ।

ब्राह्मणी—ज[11]इ एव्वं सत्थे रि अक्खमो परत्थे केण आआसि-दोसि । ( यद्येवं, स्वार्थेऽप्यक्षमः परार्थे केनायासितोसि । )

तापसः—आः अधर्मज्ञे, किं न परा[12]श्रयिणः स्वार्थादपि परार्थो गरीयान् । पश्य,

पुत्राः पाण्डोर्भुवनजयिनः पूरुवंशप्रदीपा
वृत्तैः सद्भिर्विजितमनसः पञ्च पञ्चेन्द्रकल्पाः ।

---

(१) 'लत्रोवृद्धताप ग. (२) तापसः—( पूर्वोक्तमेव पठित्वा, आयासं रूपयित्वा ) पादां वित्यादि. ग. (३) 'रत्युदय' ख. (४) 'ष्ट्वा स्पन्दित' (५) भुजाभ्यां ख. ग. (६) त्तो अदीदो म.' ग. 'त्तो अभिदो म.' ख (७) 'म एसा वे.' ग. (८) 'तानां प्राण.' घ. (९) 'हान् प्र.' ग. (१०) 'पराणि चे' ख. ग. (११) 'जइ त्र' ग (१२) 'यिणां स्वा.' ग.

शत्रुच्छद्मक्षापितविमलश्री[1]यशोमानभोगाः
भोगावासे वयसि मुनयः किं न कारुण्यदृश्याः ॥

ब्राह्मणी—कहं[2] पुण एसा जण्णसेणी एव्वं अणुकम्पणीअं[3] भत्तारं अदिसाहसे णिओएदि ।

(कथं पुनरेषा याज्ञसेनी एवमनुकम्पनीयं भर्तारं अति-साहसे नियोजयति ।)

तापसः—ननु तदेतद्वर्तते । हृदयं हि नाम कठिनवस्तु[4]समुच्चयः स्त्रीणाम् । तथाहि,

वनं प्रस्थापितः पुत्रो रामः सद्गुणभूषणः ।
प्रापितो निधनं भर्ता केकयेन्द्रतनूजया ॥

एहि तावत् । सर्वथैनमतिसाहसान्निवर्तयिष्यावः ।

(परिक्रम्या[5]वलोक्य) हन्त व्यर्थो नः परिश्रमः ।

य एषः,

बधिरयति जगन्ति शंखनादैः
किरति महीमगमैर्गदावरुग्णैः ।
अनुचरमपगर्वमेव कुर्वन्
पितरमिवापहसन् जवेन याति ॥

तदागच्छ । अग्निशरणं गत्वा व्यतीतकालं सप्रायश्चित्तं कर्म्म समापयावः

(निष्क्रान्तौ)

(१) 'श्रीर्यशो.' ख. ग. (२) 'जइ एव्वं कहं.' ग. (३) 'अं पत्थं भ.' ग. (४) 'स्तुसमुदायः स्त्री' ग. (५) 'क्रम्योर्ध्वमव.' ख. ग. (६) 'निष्क्रान्तः सकळत्रस्तापसः' ख.

( ततः प्रविशति गदया तरुभङ्गं नाटयन् आध्मायमान-
शंखो भीमसेनः )

भीमः—एष भोः,

व्यायच्छन् गदया वने मृगकुलं शंखस्वनैस्त्रासय-
न्नुद्वेलीकृतसिन्धुरम्बुभिरुरःक्षिप्ताम्बुग्राहस्रुतैः ।
पाञ्चाल्या मनसः प्रियाणि कुसुमान्याहर्तुमिच्छन् गुरोः
संघर्षादिव गन्धमादनमहं शैलेन्द्रमारूढवान् ॥

तदहमेषां प्रभवमन्विच्छामि । ( परिक्रम्यावलोक्य ) अहो भीरुजनदुरासदोयमचलोद्देशः । अत्रहि,

अन्तर्गुहोद्गतमहाजगरास्यदंष्ट्रा-
व्याकृष्टपादमुरुगर्जितमेष सिंहः ।
दंष्ट्राग्रकृष्टपृथुकुम्भतटास्थिवल्गद्-
ग्रीवानि[1]खातनखमाक्षिपति द्विपेन्द्रम् ॥

या[2]वदन्विच्छामि । अहो महानयं नयनोत्सवः ।
अ[3]त्रहि,

नृत्यन्ति क्वचिदत्र किन्नरवधूगीतस्वनानन्दितै-
र्वीणावेणुमृदङ्गनादमुदितैर्देव्यो वृताः खेचरैः ।
सस्त्रीकैः करबद्धरत्नचषकैरन्यत्र गोष्ठीगतैः
माद्यद्भिर्मधुरोपदंशमधुरै[4]र्मैरेयमापीयते ॥

( प[5]रिक्रम्य क्वचिदानन्दाहृतदृष्टिरवलोक्य )

अहो तुखलु रमणीयवस्तुविषयाणामनन्तता रसान्तराणाम् । इहहि,

---

(१) 'निपात'. ख. (२) '( परिक्रम्यावलोक्य ) याव'. ग. (३) अत्रहीति नास्ति. ग. (४) 'मधुरै'. ग. (५) 'अन्यतो विलोक्य परि' ग

मणिफलकमनोज्ञस्वर्णडोलाधिरूढा
त्रिपुरजयिनिबद्धं गेयमावर्तयन्ती ।
श्रवणयुगललोलत्कुण्डलामृष्टगण्डा
निगलयति गतिं मे मुग्धसिद्धाङ्गनैषा ॥

[1]किमेभिरधीरजनविस्मयनीयैः [2]पदार्थैः । या[3]वत् प्रियानियोगमनुतिष्ठामि । ([4]स्पर्शसुखं रूपयन्) इह सन्निहितेन जलाशयेन भवितव्यम् । तथाहि,

अयं हि सौगन्धिकगन्धमावहन्
शनैः शनैः सान्द्रतुषारशीतलः ।
परिष्वजन्मे जनको यथा सुखं
करोति रोमाञ्चसमाचितां तनुम् ॥

[5]इदं हि तद्दिव्यसरः । यावदुपसर्पामि । अये मां दृष्ट्वा दण्डपाणिरयमन्तकः प्राप्त इति वदन्तः सरोरक्षिणो यक्षराक्षसगणा भी[6]ताः पलायन्ते ।

(पुनर्निरूप्य) अहो रामणीयकमस्य जलाशयस्य । इहहि,

हैमाः स्वच्छे पयसि निकराः पद्मसौगन्धिकानां
नालैः शुभ्रैर्मरतकमयैर्विद्रुमैश्चाभिरामाः ।
वप्रेष्वच्छस्फटिकरचितेष्वावृ[7]ता च्छाययामी
सं[8]लक्ष्यन्ते मधुरसजुषामारवैः षट्पदानाम् ॥

(१) '(स्मृत्वा) किं'. ख. 'किममीभि'. ग. (२) पदार्थैरिति नास्ति. ख. 'यैर्यावत्पदार्थैः'. ग. (३) 'मत्प्रि'. ग. (४) 'परिक्रम्य स्प'. ग. (५) 'तदस्य मार्गमनुसरामि । (परिक्रम्य दृष्ट्वा सहर्षं) सफलो मे परिश्रमः । इदं त' ग. (६) 'तास्तीरतः प'. ग. (७) 'च्छा-गता च्छा'. ख. (८) 'संरक्ष्य' ख.

तद्यावदुपसर्पामि । ( उपसृत्य पुष्पावचयं कृत्वा सगर्वं )

[1]कुसुमानि हराम्येष बाहुवीर्यमुपाश्रितः ।
यदि शक्तः पुमान् कश्चिन्निवारयतु मामिह ॥

( नेपथ्ये )

आः दुरात्मन् अतिकठिनहृदय[2] करुणारसानभिज्ञ कपटकृतसकलदुर्बलजीवलोकजीवग्रहणसमुद्भवस्य दुरितसञ्चयस्य फलमिदानी[3]मनुभूयतामलकेश्वरस्य[4] सरस्सारभूतसौगन्धिकापहरणसमुद्दीपितक्रोधेन क्रोधवशेनोपनीयमानम् ।

( ततः प्रविशति[5] खड्गहस्तः सक्रोधो राक्षसः )

राक्षसः—( आः दुरात्मन्निति पूर्वोक्तमेव पठति ) इहहि,

दुष्कर्मसञ्चय[6]कृतागसि जीवलोके
जीवग्रहोत्सवरतः किल गर्वितस्त्वम् ।
अस्मिन् क्षणे निशितखड्गनिकृत्तदेहं[7]
त्वामन्तकान्ति[8]करसङ्गमहं करिष्ये ॥

भीमः—राक्षस किमिदं प्रलप्यते । क्वासावन्तकः ।

राक्षसः-( सावधानं निर्वर्ण्य ) आः[9] मानुषः खल्वेषः । ( अपविद्धायुधः स्थित्वा, पुनः[10] खड्गमुद्धृत्य ) रे रे मानुषापसद,

खड्गेन क्षतविग्रहस्य पिशितैः क्लृप्तोपदंशो[11]त्तरं
कोष्णं ते रसयन् कपालचषके[12]णाकण्ठमास्रासवम् ।

(१) श्लोकात्पूर्वं 'भोः' इति, ग. (२) 'य मूढ क' (३) 'नीमवि-कलमनु'. ग. ख. (४) 'स्य स्वामिनः स.' ख. (५) 'ति क्रोधवशः सक्रोधः सखड्गः' ग. (६) 'यहृतायुषि जी' ख. (७) 'देहस्त्वा'. ख. (८) 'कान्तक'. ख. (९) 'धिङ् मा' ग. (१०) 'नराभिमुखः ख' ग. (११) 'क्षतैः'. ग. (१२) 'षकैरा'. ग. 'भाजनेना'. ख.

आ[1]न्त्रस्रग्गुणमुद्वहन् विरचयन्नेपथ्यमस्थिव्रजै-
नृत्यन्मत्तविलासजां धनपतेः प्रीतिं करिष्याम्यहम् ॥

भीमः—[2]मन्ये मृतविलासजां शुचं करिष्य[3]तीति ।

राक्षसः—हहह आहारभूताः खलु मनुष्या राक्ष[4]सानाम् । हनिष्यन्तीति मन्ये ।

भीमः—राक्षस किं न मनुष्यो रामः ।

राक्षसः—मूढ किं किं राममपि मनुष्यं मन्यसे । किं नासौ नारायणो देवः ।

भीमः—यद्येवं, अहमपि समीरणो देवः ।

राक्षसः—अनृतमेतत्, किं देवो देवस्यापराधमाचरति । अथवा,

समीरणस्त्वं भव भूमिरम्बरं
भवाम्बु तेजोऽथ समस्तमेव वा ।
अनेन खड्गेन शिरस्तु ते क्षणा-
न्निपातयिष्यामि धनाधिपद्विषः ॥

भीमः—किं किं रे रे राक्षसकीटक,

गुप्ता राक्षसपुङ्गवं हतवता येनैकचक्रा बकं
प्राप्ता येन घटोत्कचस्य जननी हत्वा हिडिम्बं क्षणात् ।
यः कु[5]र्म्मीरमपि क्षणा[6]न्मृदितवानग्रेसरं रक्षसां
तस्य त्वं मम दुर्मते वद शिरः खड्गेन किं छेत्स्यसि ॥

राक्षसः- अतः परं खड्गस्ते कथयिष्यति । ( उभौ युद्धं कुरुतः )
( गदया भग्नः प्रहरणमपविध्य सभयं पलायमानो निष्क्रान्तो राक्षसः )

---

(१) 'सान्त्रं स्र'. ख. 'आन्त्रैः स्र'. घ. (२) 'मया हतो मन्ये'. ग. (३ 'ष्यसीति'. ग. (४) 'सान् हनिष्यन्तीति' ख.ग. (५) किर्मीरेति औत्तराहाः। किम्मीरेति द्राविडाः कुर्म्मीर इत्यन्ये । (६) 'क्षणान्मर्द' ख.

(नेपथ्ये)

क्षेत्रे पाण्डोरयं जातो मारुताद्भुवनायुषः ।
स्वैरं हरतु भीमोऽयं[1] कुसुमानि प्रियाकृते ॥

भीमः—अनुगृहीतोऽस्मीदानीम् । (इति प्रतिनिवृत्तः) (ततः प्रविशति प्रियया सह विद्याधरः) (उभौ मारुतपीडां रूपयतः)

विद्या—प्रिये गुणमञ्जरि,

तिर्यग्विक्रम्पयति घूर्णयते मुहुर्नौ
डोलीकरोति च गतागतमादधानः ।
वप्रैरयं प्रतिहतः पवनः सुमेरोः
शृङ्गान्तरे मधुमदस्य करोति लीलाम् ॥

गुणमञ्जरी—(ससम्भ्रमं) णाह गण्ह मं गण्ह ।
इमिणा दुव्विणीदेण मारुदहदएण परिचीअमाण[2]
(भोणोल्लव्वाणाअवेरिणा जव एसो ण मारेइ?)
[नाथ गृहाण मां गृहाण । अनेन दुर्विनीतेन मारुतहतकेन परिचीयमान.....................?]

विद्याधरः—प्रिये एष गृह्णामि, (ग्रहणं[3] नाटयित्वा)

अवाहतहृदयाच्च व्यायतादूर्घ्वबाहु-[4]
द्वितयमभिपतन्तीं त्वां विलोलां गृहीतुम् ।
सततगतिरयं मां दुर्निवारप्रवृत्ति-

(१) 'मो मे कु'. घ. (२) परिचीअमाणं भोगिणं विअ णाअवेरिणा जव एसो णमं मारेइ । 'परिचीअमानं भोगिनमिव नागवैरिणा' इति छायेति वार्णट्महाशयस्याभ्यूहः । 'परिपीडिअमाणं णाइव्व णाअवैरिणा' ग. (३) 'णाविआगं रूवयि'. ग. (४) 'ग्रही'. ख.

विधिरिव विपरीतो वन्ध्ययत्नं विधत्ते ॥

किमिदानीं करिष्ये । भवतु । दृष्टम् भोः प्रभञ्जन

भवन्मित्रस्य शक्रस्य शासनात्तव पुत्रयोः ।
हनुमद्भीमयोः कर्तुं कल्याणं गम्यते मया ॥

अये[1] अनुकूलः संवृत्तः ।

गुणम—णाह किण्णामहेओ एसो दुट्ठमारुओ । [नाथ किन्नामधेय एष दुष्टमारुतः ।]

विद्या—सप्तर्षिमण्डलग्रहाणामन्तरस्कन्धवर्ती चण्डवेगः परावहो नाम ।

गुणम—(अधोवलोक्य) णाह किमिदं छत्तमत्तपरिमाणं लक्खीअदि । [नाथ किमिदं छत्रमात्रपरिमाणं लक्ष्यते । ]

विद्या—इदमपि[2] दूरत्वादविभावितविस्तारमवनिचक्रम् । यावदवतरावः ।

गुणम—णाह पेक्ख पेक्ख, गुम्मा[3] दीसन्ति । [नाथ पश्य पश्य, गुल्मा दृश्यन्ते । ]

विद्या—मुग्धे नैते गुल्माः । पर्वताः खल्वमी । अवतरावः । (अवतरणं नाटयतः)

गुणम—अम्मो[4] इदं महत्तं सव्वुत्तम् । (अवतीर्य दृष्ट्वा) [अम्मो अयं महान् संवृत्तः ।] किण्णामहेओ एसो पव्वओ । [किन्नामधेय एष पर्वतः । ]

विद्या—निषधोयमनुप्राप्तः,

(१) 'अयमनु'. ग. (२) 'मतिदू'. ख. अयं पाठः युक्तः । (३) 'गुहमाओ' ख. (४) 'णाह अम्मो सव्वं म.' ख. 'अम्मो सव्वं इदं म'. ग. अम्मो इदं महत् संवृत्तमित्यपि छाया सङ्गच्छते ।

गुणम–एसो को। [एष कः।]

विद्या–हेमकूटोयमास्थितः।

गुणम–अअं अवरो को। [अयमपरः कः।]

विद्या—हिमवानयमासन्नः,

गुणम—(अधो विलोक्य) किं एदं सरदब्भाणं विअ समूहो दीसइ। [किमेतत्, शरदभ्राणामिव समूहो दृश्यते।]

विद्या—कैलासोत्र विराजते॥

अत्र भगवन्तमन्तकान्तकं[1] प्रणम्य यास्यावः।

नमोस्तु[2] सकलजगदैश्वर्यश्लाघनीयाय।

मुग्धेन्दुशेखरपिशङ्गजटाधराय

स्निग्धेन्द्रनीलमणिनीलगलान्तराय।

दुग्धोदफेनपटलामलभस्मधूली-

दिग्धाय दग्धमदनाय नमः शिवाय॥

गुणम—णमो पव्वईबद्धप्पणआअ। [नमः पार्वतीबद्धप्रणयाय।]

विद्या—विलासिनि! सोयमासादितो गन्धमादनः, यत्रास्ते हनुमान्।

गुणम-अम्मो इह वि सुबद्धसिणेहा आअदा सग्गलच्छी दीसइ। [अम्मो इहापि सुबद्धस्नेहा आगता स्वर्गलक्ष्मीर्दृश्यते।]

विद्या–सत्यमाह भवती। इहहि,

प्रासादैरमृतांम्बुफेनधवलैः[3] संरुद्धतारागणै[4]

हैमैर्मौक्तिकमालिकापरिगतप्रान्तैर्गृहैर्भूषिता।

रागानन्दितखेचरैर्वरवधूगीतैर्मनोहारिणी

(१) 'न्तकमभिप्र'. ख. ग. (२) '(प्रणम्य) नमो' ख. (३) तांशुफे'. ख. (४) 'गणा'. ग.

स्वर्गश्रीरलकेति नाम्नि नियतो भेदो न वस्तुस्थितौ ॥

गुणम—( सभयं ) णाहको णु खु एसो सजलजलहरत्थणि[1]अगम्भीरो सद्दो [2]मं पीडेइ । [ नाथको नु खल्वेष सजलजलधरस्तनितगम्भीरः शब्दो मां पीडयति । ]

विद्या—( ससम्भ्रममवलोक्य ) प्रिये पश्य पश्य,

गर्जन्तं घनमुपरि द्विपेन्द्रशङ्की
दन्ताभ्यामभिनिनदन् विभिद्य वेगात् ।
आमूलं महति महीरुहे निखातौ
नोत्क्रष्टुं प्रभवति तौ पुनर्द्विपेन्द्रः ॥

गुणम—हद्धि बलगव्विदाणं पमादो । [ हा धिक् बलगर्वितानां प्रमादः । ]

विद्या—[3]सखि एष भीमस्तस्य कपीश्वरस्य कदलीवनमुपसर्पति । तदस्य निकटवर्तिस्फटिकशिलातल[4]मध्यासीना[5]वेतयोरविज्ञातपुरस्सरयोः प्रभावान्त[6]र्हितौ चेष्टितमवगम्य तदनुरूपमुपसर्पावः । अपि च,

शुष्यद्दन्तच्छदकिसलयं [7]तान्तताम्रा[8]यतोष्ठं
स्वेदैः किञ्चिल्लुलिततिलकं गण्डयो[9]र्बद्धरागम् ।
वक्त्रं जालैर्ग्लपित[10]मदयैस्तिग्मभासः प्रभाणां
वेलामे[11]नामिह सुतनु ते विश्रमं वाञ्छतीव ॥

---

(१) 'णिदग'. ख. (२) मा पी'. ख. (३) '(विलोक्य) एष'. ग. (४) 'लमिदम'. ख. 'मणिशिलातलम'. ग. (५) 'नावनयो'. ग. 'नावनयोरविदितपरस्परयोः'. घ. (६) 'न्तरितौ'. ख. (७) 'कान्त'. ग. (८) 'यताक्षं'. ग. अयं पाठः युक्तः । (९) 'र्बुद्धरा'. ख. (१०) 'तमुद'. ख. (११) 'मेतामि'. ग.

(अन्तर्हितौ तिष्ठतः ।)

भीमः—अहो[1] प्रियाभिलाषपरिपूरणार्थमतित्वरितस्यापि मम नयनयुगलमवश[2]माकर्षति नगवनोद्देशः ।

वातेरितप्रचलनीलदलाकुलोऽयं
पक्वैः फलैः शबलितः कदलीवनान्तः ।
आभाति विद्रुमलताविटपैः प्रभिन्न-
स्त्वङ्गत्तरङ्गपरि[3]कीर्ण इवाम्बुराशेः ॥

यावदुपसर्पामि । (उपसृत्य परितो विलोकयन्) मन्ये कस्यचिदयं महानुभावस्य परिग्रहः । न कि[4]ञ्चिन्मृगपक्षिभिरपि परिणतं फलमवलुप्यते । किन्तत्, क्वात्र तेजः, येन परतेजः प्रकर्षो मृष्यत इति । नचास्य सुयोधनस्येव विग्रहे गुरुवचनान्तरायः । तदस्य मानशृङ्गमुत्पाट्य यास्यामि । (नाट्येनोत्पाट्य) भोः,

यद्यस्ति कश्चिदिह शक्तिकृताभिमानः
कांक्षेत्पुरं यदि परेतपतेः प्रयातुम् ।
स प्रोल्लसत्भ्रुकुटिभीमललाटभूमे-
श्चण्डक्रु[5]धः पततु मे पुरतः क्षणायुः ॥

(नेपथ्ये)

आः दुरात्मन् अनात्मज्ञ पराज्ञासमुल्लंघनपर अपरिज्ञातप्रकृष्टपुरुषबलपराक्रमप्रभाव अतिक्रान्तमर्याद क्रूरकर्मनिरत मानुषा[6]पसद दुर्विनीत किमियन्तं कालं न श्रुतिपथमुपगतवानस्मि ।

---

(१) 'अहोनुखलु प्रि'. ग. (२) 'शमयमा'. ग. ख. (३) 'रिपूर्ण'. ग. (४) 'ञ्चिदिह मृ' ख (५) 'क्रुधापि'. ग. (६) 'नुषयशो दु'. ग.

भीमः—अयमयं भोः,

दृढविरचितमुष्टिर्द्दृष्टिभासां वितानै-
र्वियदधिकपिशङ्गैः सेन्द्रचापं प्रकुर्वन् ।
भ्रुकुटियुतललाटः स्पष्टदंष्ट्रांशुजालै-
रपर इव नृसिंहो दृश्यते वानरेन्द्रः ॥

(ततः प्रविशति हनुमान्)

हनु—(सक्रोधं आः दुरात्मन्निति पूर्वोक्तमेव पठित्वा) तदधुना,

श्लक्ष्णप्रपिष्टवपुषं भुवि मुष्टिपातै-
रल्पप्रयासहृतजीवितमन्तकेन ।
अक्ष्णोर्निमेषसमकालमहं करोमि
क्रव्याददन्तसुखचर्वितकीकसं त्वाम् ॥

भीमः—अहो हास्यमभिधानम् । वानरः किल मामेवं करिष्यति ।

हनु—किं किं वानर इत्यवज्ञा । हन्त भोः,

स्वैरं गोष्पदवद्विलंघ्य जलधिं नक्तञ्चराणां गणान्
हत्वैरावतदन्तकोटिलिखितैर्वक्षःस्थलैर्भीषणान् ।
प्लुष्टा येन पुरा करैर्दिनकृताप्यस्पृष्टपूर्वा मया-
ल्लङ्का किन्न स वानरो वद जगत्यस्मिन् नवा विश्रुतः ॥

भीमः—सोपि वानरस्त्वमपि वानरः ।

हनु—किं किं सोपि वानरस्त्वमपि वानर इति । तेन हि अमुनैव तावद्वानरेण सह युध्यस्व ।

भीमः—अहो श्लाघ्यं मे रणकर्म

(१) 'यदरुणवि'. ख. ग. (२) 'युगल'. ग. (३) 'टस्प'. ग. (४) 'शुलदमीर'. ग. (५) 'ति सक्रोधो ह'. ख. ग. (६) 'चर्वण नी' ख. ग. (७) 'दिनकृताप्य'. ख 'दिवाकरकैरस्पृ'. ग.

किं वदिष्यन्ति[1] राजानः
श्रुत्वा फल्गुनपूर्वजः।
केनापि कपिना युद्धे
भीमः संगतवानिति॥

हनु-(आत्मगतं) एवमिदं, अद्य सुप्रभाता निशा। आर्ता[2] मे मामविज्ञाय गच्छति। किन्नु खलु करिष्ये। भवतु। अस्य गर्वदोषम[3]पनयामि। (प्रकाशं) भोः पुरुष ममाज्ञामुल्लंघ्य न शक्यते गन्तुम्। (इति पुरत आस्ते।)

भीमः--आः जरद्वानर अपसर।

हनु-जरद्वानरोस्मि, नापसरणक्षमः।

भीमः[4]-त्वां[5]मुत्क्षिप्यास्मिन् गिरिकूटे प्रक्षिप्य यास्यामि।

हनु-छन्दतः।

भीमः-(पुच्छाग्रं स्पृष्ट्वा सरोमाञ्चम् आत्मगतं) किन्नुखलु आर्य-युधिष्ठिर इव मे सुखस्पर्शोयं वानरः। अथवा किमयुक्त-कल्पनया। (उत्कर्षि[6]तुमशक्तः सव्रीडं)

धिङ्नागायुत-सन्निभं मम बलं धिङ्मारुतादुद्भवं
धिग्वा दिग्विजये जयं क्षितिभृतां धिग्जिष्णुसोदर्यताम्।
प्रीतस्त्वं भव भोः सुयोधन चिरात्पाञ्चालि ते मूर्धजान्
संयन्ता[7] रिपुशोणितारुणकरः को नाम धन्यः पुमान्॥

(१) 'ति नो राजा श्रु'. ग. (२) 'ता मामवज्ञा.' ग. (३) 'षमात्रम'. ख 'षमपनेष्यामि'. ग. (४) अस्मात्पूर्वं 'भीमः—अपेहि हनुमान्—किन्न शृणोषि जरद्वानरोस्मीति। भीमः—(अनाकर्ण्य) आः अपगच्छ। एवमिदानीं करिष्ये त्वामु' इति ख (५) 'आः अपेहि त्वा'. ग. (६) 'कम्पयितु'. ख (७) 'संहर्ता रि'. ख.

हनु–(आत्मगतं) अहो बलं, यन्मया[1] सम्पीडितबलेन कथञ्चि-
दासितम्। भो सुयोधन मृत्युदंष्ट्रान्तरं[2] प्रविष्टास्ते प्राणाः।

भीमः–(आत्मगतं) किन्नु खलु करिष्ये। भवतु। दृष्टम्। अत्र
परित्याज्याः प्राणाः। (प्रकाशं) भो वानर इदानीं प्राप्तस्ते
कालः। कयापि देवतया स्तम्भितं ते शरीरं मुष्टिभिरेव
पोथयामि।

यदि स मम गुरुः स्वजातिभक्त्या
स्वयमभिगम्य न[3] वारयिष्यते माम्।
स्फुटमिह भविता विहङ्गमानां
कपिपिशितेषु विभागजो विवादः॥

हनु–इदमपि पश्यामः।

(उभौ मुष्टिभिः प्रहृत्य युद्धं[4] कुरुतः)

विद्या–(द्वयोरन्तरं प्रविश्य निवारयन्)

हनुमन् भीम युवयोर्भ्रात्रोर्ज्येष्ठकनिष्ठयोः।
मारुतयोः किमिदं घोरमसाम्प्रतमुपस्थितम्॥

भीमः–(विलज्य स्थित्वा आत्मगतं) युक्तमेतत्[5]स्पर्शसुखं संवृत्तम्।

हनु–कुन्तीमातः एहि।

भीमः–(उपसृत्य) आर्य अभिवादये[6]।

हनु–एह्येहि वत्स[6] अद्य खल्विदं[7]मवगतम्।

लज्जानमद्वदनमन्थरमीक्षणार्धं

---

(१) 'लं मया' ख. ग. (२) 'त्युदन्तान्तरप्र'. ग (३) 'निवार' ख. ग. (४) 'नियुद्धं' ख. ग (५) 'हन्त युक्तं'. ग. (६) 'ये भीमोहमस्मि'. ख. 'त्स. परिष्वजस्व, अद्य'. ख. 'त्स, (परिष्वज्य) अद्य'. ग. (७) 'दं ममाव'. ग

सम्प्रश्रयाहृतकरद्वयरुद्धवक्षः ।
साकूतदर्शनकृतैककटाक्षपात-
माश्लेषसौख्यमनुजस्य सुधेत्यभेदः ॥

(ससम्भ्रमं विद्याधरमवलोक्य) आमोदाद्विस्मृतः समुदाचारः।
भद्रमुख एतदासनमास्यताम् ।

विद्या—ननु युवामपि श्रान्तौ ।

हनु—आस्व। कुमार आस्व। (सर्वे उपविशन्ति) अथ कोत्र-भवान् ।

विद्या—अहं पुरन्दरस्य नियोगकारी कल्याणको नाम विद्याधरः। इयञ्च मम सहचारिणी गुणमञ्जरी नाम ।

हनु—कुत इदानीम् ।

विद्या—स्वर्गादागतोऽस्मि ।

भीमः—अपि वृत्तेन परितोषयति पितरमर्जुनः ।

विद्या—किमिति न परितोषयेन्महासत्त्वः ।

भीमः—कथं महासत्त्व इति।

विद्या—भोः श्रूयताम् । प्रवृत्ते खलु नृत्तोत्सवे स्ववंशप्रभवभूमि-कायां सस्पृहमवलोकितायामनुपश्यतो गुरोराज्ञाकरेण सख्या चित्रसेनेन प्रेषितां,

शृङ्गारवेषरमणीयवपुःप्रकर्षां
रङ्गोत्थितामुपगतां स्वयमेव शय्याम्।
तामुर्वशीमुपचरन् गुरुभिः समानां

(१) 'आकूत'. ग. (२) 'न्तौ, हनुमन् आस्व कुमार आस्व'. ग, (३) 'हनु—अथ'. ग (४) 'हचरी गु.' ख. (५) 'वप्रभू'. ग (६) 'प्रकाशां' ख. ग. घ.

लज्जानमद्वदनचन्द्रमसं चकार ॥

भीमः[1]—भोः सदृशमिदमनुष्ठितम् ।

हनु- अथ किमागमनप्रयोजनम् ।

विद्या—अहं खलु सेवागतोयमुपह्वरमाहूय स्वामिना समादिष्टः । यथा रामलक्ष्मणयोरिव भ्रातृत्वं[2] युवयोरवबोधयेति ।

हनु-हा राम (इति मूर्छितः पतति)

उभौ—समाश्वसिहि समाश्वसिहि ।

हनु-(समाश्वस्य) हा भक्तवत्सल? किन्न जानीषे,

शाखामृगोस्मि तरुपल्लवमात्रसारः
सुतुत्यः सतां सदसि यस्य परिग्रहेण ।
तेन त्वया विरहितो रघुनन्दनेन
भारं महान्तमिव जीवितमुद्वहामि ॥

हा नाथ,

पवनतनय हे सखे हनूम-
न्निति विगलद्वचनामृते मुखेन्दौ ।
तव वरद[3] दशा (श्व? व) कुर्वतो मे
परमिव[4] वञ्चनमेव दीर्घमायुः ॥

हा वैदेहि,

जनकं जनकं किलाह लोको
जनकस्त्वं जनयन् पुनर्ममासून् ।
इति जानाकि यस्त्वयाहमुक्तः[5]

(१)'उभौ—स' ख. (२) 'व हनुमद्भीमयोः सौभ्रात्रमवबोधय कल्याणक इति'. ग. (३) 'वरमृगशावकु'. ग. (४) 'वर' ग (५) 'यस्त्वया'. ग.

त्वद[1]स्त्रं मनसीव तन्ममाद्य ॥

हा लक्ष्मण,

भ्रातुर्ज्येष्ठस्य तं स्नेहं विभज्य मयि भृत्यताम्।
कथमेकः कृतान्त[2]स्त्वं समग्रमनुभूतवान्॥

भीमः—धीरो[3] भवान्नात्यर्थं शोकवश्यो भवितुमर्हति[4]। वियोगपरिणामो ननु संयोगः।

हनु—कुमार इदानीं[5] कृतार्थोस्मि।

भीमः—अहो गुणवत्ता रामस्य, यदयमार्यस्यावशयति हृदयम्। यदि नात्या[6]यतस्तस्य महात्मनश्चरितश्रवणकुतूहलि मे चेतः।

हनु—कुमार श्रूयताम्। स खलु धर्मसंरक्षणार्थं मानुषतामुपगतो भगवान् विष्णुः।

हित्वा राज्यसुखं पितुर्वचनतो नक्तंचरान् कानने
हत्वा शूर्पणखानिकाररुषितानन्विष्य सीतां हृताम्।
कृत्वा वालिवधार्जितेन सुहृदा सेतुं व्यतीताम्बुधि-
र्लङ्केशं हतवांस्तमन्यमकरोत्प्रायादयोध्यां पुनः॥

ततः सहस्राधिकमयुतं वर्षाणामनुरञ्जितजीवलोकः स्वर्गलोकमितो गतवान्।

भीमः—आर्य[7] महानयमनुग्रहः। कथेयममृतसेक इव श्रवणयोः।

विद्या—यथावदनु[8]ष्ठितशासनममराधिपतेर्निवेदयामि।

---

(१) 'त्वदस्त्रं' ख. (२) 'न्तस्त्वं'. ख. (३) 'वीरः खलु भवा'. ग. (४) 'तुं नामार्हं'. ग. (५) 'नीं प्रकृतिस्थोस्मि'. ख. 'नीं प्रतुष्टोस्मि,. ग. (६) 'नात्यायासस्त' ख. ग. (७) इतः परं. ख. ग. योरादर्शयोर्द्वयोरपि अनुबन्धभाग उपक्रान्तो दृश्यते। (८) 'यावदादिष्टमनुष्ठितममरा' ख.

हनु-एवं गच्छतु भवान् पुनर्दर्शनाय ।

(निष्क्रान्तो विद्याधरः सह प्रियया)

अद्यमे सफलं चक्षुः स्मारितश्चापि राघवः ।

भूयस्त्वद्गात्रसंश्लेषमिच्छत्येषा तनुर्मम ॥

(इति परिष्वजाति) कुमार धार्तराष्ट्रानधिकृत्यैष मे निश्चयः ।

अनतिचिरविमुक्तैर्निष्ठुरैर्मुष्टिपातैः

स्फुटितपृथुशरीरा वैरिणस्तावकीनाः ।

रणशिरसि हतानां कौरवा राक्षसानां

गतिभिरविरलाभिः शोधयिष्यन्ति मार्गम् ॥

भीमः-एवं चेद् व्यर्थो मे भुजयुगलयोर्भारः ।

हनु-भवतु । एवं[1] तावत्करिष्ये ।

(निर्घोषैः[2] ? ) शुष्काशनिशोषितासून्

कर्तास्मि सन्नो ज्वलनप्रकाशम्[3] ।

पार्थस्य सत्केतुललामवासी

प्रक्षीणपक्षान्युधि धार्तराष्ट्रान् ॥

भीमः-दिष्ट्या सनाथाः पाण्डवाः ।

हनु—कुमार किन्ते भूयः प्रियमुपहरामि ।

भीमः—

प्रियं प्रियाया विहितं वशीकृता

विजित्य संख्ये परिपन्थिनः पथि ।

त्वदङ्गसङ्गाच्च तनुर्विशोधिता

कृतार्थभूतैः किमिवान्यदिष्यते ॥

(१) 'एवमेव क'. ख. (२) 'निर्घोषशु'. ग. (३) 'काशान्' ख.

(भरतवाक्यम्)

तथाप्येतावदस्तु ।

दोषाश्च नाशमुपयान्तु कृतावमुष्यां
भूयोभवं क्षपयतान्मम नीलकण्ठः ।
निर्धार्तराष्ट्रनियतिं निखिलां धरित्रीं
पायान्नृपः सविजयोयमजातशत्रुः ॥

कल्याणसौगन्धिकं
समाप्तम् ॥

---

## अनुबन्धः ॥

भीमः—आर्य महानयमनुग्रहः । कथेयममृतसेक इव मे श्रवणयोः

विद्या—अस्ति सन्देशः ।

हनु—संबोधितोस्मि । (साञ्जलिरुत्थाय) किमाज्ञापयति देवः ।

विद्या—ननु आसनस्थेनैव भवता श्रोतव्यम् ।

हनु—अनुगृहीतोस्मि । (उपविशति)

विद्या—

यः सञ्जातं पुरा रामो देवो नारायणप्रभुः ।
तस्य सख्यं प्रियां पश्य द्रौपदीं जानकीमिव ॥

हनु—सम्यगनुबोधितोस्मि ।

---

(१) 'तां मम'. ख. (२) 'सोयमजा'. ख. (३) 'तं, श्रीनीलकण्ठस्य कृतिः'. ख. 'इति नीलकण्ठकविविरचितः कल्याणसौगन्धिकं नाम व्यायोगः समाप्तः'. ग. (४) 'समवबो'. ग. (५) 'व्यं किल'. ग. (६) 'आतः पु'. ग. (७) 'सख्युः प्रि'. ग.

विद्या—यावदादिष्टमनुष्ठितममराधिपतेर्निवेदयामि।

उभौ–यद्भवते रोचते।

(निष्क्रान्तो विद्याधरः सह प्रियया)

हनु–कुमार मार्गमादेशय।

भीमः—इतइतः।

(उभौ पर्वतावतरणं नाटयित्वा)

भीमः- इयमाश्रमनिकटवर्तिनी वृक्षमध्यासीना किमपि चिन्तयन्ती यज्ञसेनदुहिता।

हनु–

अद्येम सफलं चक्षुः स्मारितश्चापि राघवः।
भूयस्त्वद्गात्रसंश्लेषमिच्छत्येषा मतिर्मम[2]॥

(परिष्वजाति)

(ततः प्रविशाति द्रौपदी)

द्रौपदी–किण्णुहु चिराअदि णाहो।

उभौ—(उपसृत्य) देवि सिद्धस्ते मनोरथः।

द्रौपदी–(साञ्जलिरुत्थाय) जेदु णाहो। णाह को एसो।

भीमः- नन्वार्यो हनुमान्।

द्रौपदी -जेदु अय्यो विपक्खपरिपीडिआणं इत्थिआणं सरिणीभूदो। एत्थ उवविसदु।

हनु–भद्रे,

अजातशत्रुप्रमुखभ्रातृभिर्ध्वस्तशत्रुभिः।
अधिष्ठितपदैः सार्धं चिरं[3]हर्षमवाप्नुहि॥

(१) 'यदहमप्यनु'. ग. (२) 'तनुर्मम'. ग. (३) 'चिरं ह'. ग.

आस्व कुमार आस्व। (सर्वे उपविशन्ति)।

भीमः—(पुष्पाण्युपनीय) अमूनि गृण्हीष्व।

द्रौपदी–(गृहीत्वा सहर्षं) अज्ज खु मए (दिण्णा दत्तन्तेल्लोकिसार-भूदो गन्धमादणात्ति ?)

हनु–(अये वै[1]नमतिसाहसान्नियुक्तवती ?)

द्रौपदी–णहि णहि। अण्णो मे मनोरहो।

हनु–कथमन्य इति।

द्रौपदी–स[2]च्चेवं सुणादु अं[3]ओ णिवुत्त[4]सपमआणं णाहाणं देवासुर-संगामसमो समरागमो भविस्सदि।

हनु–ततस्ततः।

द्रौपदी–किन्तस्स (दिक्खोतस्स) गन्धप्पमोदबहलत्तणं[5]द (र?श) ण अंओ (विवाद) करिस्सदित्ति सोआन्धिअव्वाजेण एव्व एव्वं किदम्।

हनु–अप्ययं मनोरथः पुरन्दरेण विदितः।

द्रौपदी—विदि[6]दो अंअ (एव) अंअदस्सणं उववादीए अन्तिए मए सव्वो णारदमुहेण वि पिदुभवणं गए अज्जुणे प्पआसिदे।

हनु–सर्वमत्याङ्गिरसां[7] सुनीतम्। भद्रे किमिदानीं मया कर्तव्यम्।

---

(१) इयमेवैनमतिसाहसे नियुक्तवतीति पठनीयम्। (२) सत्यक-मिति छाया। (३) 'अज्जो'. ग. (४) 'त्तसम' इति स्यात्। (५) 'णद-स्सणं त्ति अंओ विवादं क' इति स्यात्। (६) 'विविदो अंअः एव्वं अंअदस्सणं उवाहिदाए अन्तिए मए सव्वं णारदमुहेण विबुहभवणं (विबुधभवनमिति छाया)? वि पिदुभवणं (पितुरिन्द्रस्य भवनमिति वार्थः) गए अज्जुने पआसिदम्' इति स्यात्। (७) 'सां सु'. ग.

द्रौपदी–अवरं जह रक्खसवञ्चणादो जाणाइ तह रिपुवञ्चणादो अहं परिक्खिदव्वो ।

हनु–कः संशयः । किमिदानीं, वद ।

अनतिचिरविमुक्तैर्निष्ठुरैर्मुष्टिपातैः
स्फुटितपृथुशरीरा वैरिणस्तावकीनाः ।
रणशिरसि हतानां कौरवा राक्षसानां
गतिभिरविरलाभिः शोधयिष्यन्ति मार्गम् ॥

भीमः—एवं चेद्व्यर्थो मे भुजयुगल[1]भरः ।

द्रौपदी—एसो मे पणओ । अ[2]ज्जेस्स रणभूमीए वत्तमाणस्स सण्णिहिदेण अण्णेण उग्गप्पाणादेहि संघोहिदव्वो सत्तुसंघो ।

हनु–एवमेव करिष्ये

निर्घोषशुष्काशनिशोषितास्त्रान्
कर्ता[3]स्मि तानुज्जघनप्रका[4]शैः ।
[5]पार्थः (च) सत्केतुललामवासी
प्रक्षीणपक्षान्युधि धार्त्तराष्ट्रान् ॥

त्वमपि,

त्यक्त्वेदं वनवासदुःखमचिरात्साज्ञातवासं प्रिये
नोक्तासीः कृतमात्रमेत्य मुदिता सौगन्धिकं वा रिपोः ।

---

(१) 'लयोर्भारः'.ग (२) अंअस्स रणभूमिए वत्तमाणस्स सण्णिहिदेण अंएण उग्गप्पाणादेहिं संछोहेदव्वो इति पठनीयमिति बार्णट्महाशयः । (३) 'सन्नो ज्वलन'. ग. (४) ('शान्'? शम्.). ग. (५) 'र्थस्य' इति पठनीयम् ।

पौलोमीव शतक्रतोः क्रतुशतान्याह (तुरभ्याशगात्?)[1]
भर्तुर्भूतहतात्त्वं[2] जीविततरोर्भद्रे फलं दास्यसि ॥

द्रौपदी—अणुग्गहिदह्मि।

हनु—कुमार किमपरं मया कर्तव्यम्।

भीमः—

प्रीता प्रिया त्वयि विभो नयने कृतार्थे
देव प्रसाद्य विकृतासि गुम्भ्य[3] केशः।
सौगन्धिकं सुरभिगन्धि सुरार्चितं वः
कल्याणसम्पदुदयाद्भुतकामधेनुः ॥

(भरतवाक्यम्)

दोषाश्च नाशमुपयान्तु कृतावमुष्यां
भूयोभं[4] (यं? वं) च्चपयताम्मम नीलकण्ठः।
निर्धार्त्तराष्ट्रनियतिं निखिलां धरित्रीं
पायान्नृपः सोयमजातशत्रुः ॥

श्रीनीलकण्ठस्य कृतिः। कल्याणसौगन्धिक-[5]
मेकाङ्कं समाप्तम् ॥

(१) 'तुरभ्याशगा' इति स्यात्। (२) 'तात्त्वं'. ग. 'भूतहिताय' इति स्यात्। (३) 'गुह्यकेशं' इति बार्णट्महाशयः। (४) 'योभवं च्चपयताम्मम' इति स्यात्। (५) 'कल्याणसौगन्धिकं नाटकं समाप्तम्' इत्यपि।

# टीका।

तां भवानीं भवानीतक्लेशनाशविशारदाम्।
शारदां शारदाम्भोजसितसिंहासनां नुमः॥
द्रौपद्या वचनेन हर्तुमचिरात्सौगन्धिकाख्यं शुभं
पुष्पं शंखगदात्तपाणिरचलाद्यक्षेश्वराधिष्ठितात्।
जित्वा क्रोधवशं गणं परिभवन् वीरेण सख्यं यदा
कुर्वन् वायुसुतेन चारु हरिणा पार्थाग्रजः पातु वः॥

इह किल परमाग्रहाराभिजनः श्रीनीलकण्ठकविः कल्याणसौगन्धिकाभिधं स्वभावाभिनयोपेतं प्रेक्षाप्रधानं व्यायोगं कवितुमिच्छुः तदुपक्रमे प्रयोगसम्यक्त्वापादनविघटकं विघ्नं निवारयितुं अतिधृतिच्छन्दोनिबद्धं मङ्गलश्लोकं प्रयोक्तुकामः आदौ कथावस्तूपक्षेपदक्षं सूत्रधारं प्रवेशयति—नान्द्यन्त इत्यादिना। रङ्गमुद्दिश्य क्रियमाणा सपर्या नान्दी। ततः नेपथ्यशालातः रङ्गं प्रविशतीत्यर्थः। रङ्गरूपं सूत्रं धारयतीत सूत्रधारः। सूचनात्सूत्रं वा।

प्रेक्षोपक्रमे हि कथासूचकः सूत्रधारः, सूक्तिमुद्राकलापो सुशिक्षितः स्वाधीनाङ्गव्यापारः सर्वजनानुकरणनिपुणश्च भवेत्। ततो विशुद्धवेषः जितेन्द्रियः परिवारजनपरिवृतश्च सन् भक्तिपुरस्सरं जलगन्धपुष्पधूपदीपादिभिर्नान्दीपूजां निर्वर्त्तयेत्। पूजावसाने च, श्रीकला गौरीकला मदनीकला सरस्वतीकला एवं चतुष्कलासंयुक्तां 'संक्षिप्ता'—मभिनयेत्। ततश्च रङ्गे पञ्चपदाविन्यासं कृत्वा पुष्पाञ्जलिहस्तः सभापतिसनाथां पण्डितमहासभामभिमुखीकृत्य आशीर्नमस्क्रियावस्तुनिर्देशान्यतमरूपं मङ्गलमाचरेदिति समुदाचारः।

नमस्क्रियारूपं मङ्गलमाचरति—आसीदिति। स्वनिवासशैलतुलनात् स्वावासभूतस्य कैलासपर्वतस्योद्धारात्। अचलसुतायाः संवेगोप्यत एव.। प्रसादोन्मुखः सन्तोषेणोत्फुल्लवदनः। सम्भ्रमसाहितायाः पार्वत्या आश्लेष आलिङ्गनं तद्रूपं सुखं प्रददाति, तस्मात्। यस्य शरो-

द्भवे इति 'धानुष्कः शम्भुरद्रिर्धनुरिषुरपरः कोपि मौर्वी फणीन्द्रः' इति त्रिपुरदहने विवृतम्। मुग्धः सुन्दरः। मुग्धशशाङ्केनालंकृतकपर्दे इत्यर्थः। शशाङ्क इति च चन्द्रनामाङ्कितत्वं लक्षणकाराभिमतं निर्वृत्तम्। "नान्दीश्लोके च कृते प्रीतो भवति चन्द्रमाः" इति च। व इति सभासदः प्रत्याशीः। हरकीर्तनाच्च नमस्क्रिया सिद्धा। एवमाशीर्नमस्क्रिययोः प्रयोगानन्तरं कथावस्तूपक्षेपफलकस्यामुखस्यारम्भः।

काव्योपक्षेपप्ररोचनायै नट्यामन्त्रणां करोति—आर्ये इति। आर्ये इति बहुमतं नट्याह्वानम्। इतस्तावत् इत आगम्यताम्। निरर्थकस्तावच्छब्दः।

नटी च त्वरिततरमागत्य स्वात्मानं तस्मै निवेदयति—अण्ति। अहं तव पुरतो भवामीत्यर्थः।

काव्यप्रख्यापनाश्रयां स्थापनामारभते अहमित्यादि। आर्यमिश्रैः पूज्यपादैः सभासद्भिः।

कहं विण्ति। आदेशो नियोगस्तद्रूपोनुग्रहः।

आर्यमिश्राणामादेशानुग्रह एवंरूप इति कथयितुमुपक्रान्तः सूत्रधारः 'प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत्' इति नाट्यवेदानुरोधं निखिलकविग्रामकर्त्तव्यां कविकाव्यनामकीर्त्तनां प्रस्तौति—आज्ञेत्यादिना। गुणवद्भिः गुणिभिरभिष्टुतानां नुतानां कात्यायनीचरणपङ्कजभक्तिभाजां देवीपादकमलासक्तचित्तानां षट्कर्म्मिणां द्विजन्मनां निवसतौ निवासभूते परमाग्रहारे प्राप्तप्रसूतिर्लब्धजन्मास्माकं गुरुः कविरिति साधु तेषामेव द्विजन्मनां निवसतौ उपसेवितवान् अधीतसकलशास्त्रोभूदित्यर्थः। परमाग्रहार इति ग्रामनाम। अनेन च कविमहत्त्वमुक्तम्। तदस्येत्यादि। अभिनयरूपोलङ्कारः। यथा च सुसम्पादितः प्रयोगः स्यात्तथा दर्शयेत्यर्थः।

प्रेक्षाप्रधानेषु रूपकेषु शूद्रकप्रभृतीनां कृतय उच्चैर्बहुमता लोके। तत्कथं तासां प्रहाणेन प्रकृतिरूपके प्रेक्षावतां प्रवृत्तिरित्याह—अअ इत्यादि। शूद्रक उज्जैनीराजा मृच्छकटिककारः आर्ये इत्यादि। आश्रितेषु वात्सल्यरूपं व्यसनं तद्वान्। किलार्थको ननुशब्दः।

विद्यानामिति—असकृत्पठनपाठनाद्युपयोगेन चिरपरिचितानां

विद्यानां प्रभूतगुणवत्तामचिन्तयन्नेव सर्वोपि जीवलोकः नवोदयवत्सु भोग्येषु सन्तोषमुपयातीत्यर्थः।

जुज्जईति। त्वदुक्तमुपपद्यत इत्यर्थः।

तदिहेति तत् नवोदयवत्सु भोग्येषु जीवलोकस्य तृप्तिदर्शनात् इह नवोदयवत्यस्मिन् कल्याणसौगन्धिकाभिनये सज्जीभव पात्रसमनन्तरीभवितुं सज्जा भवेत्यर्थः। नेपथ्यविधानमनुतिष्ठामि। शैलूषानुदारनेपथ्यभृतः करोमीत्यर्थः। परिक्रम्य परिक्रमणं कर्णदानं च यथावहितो भवेदिति। अये इत्याश्चर्यद्योतकः। किन्नु खल्विति कारणापेक्षी। सज्जननियोगानुष्ठानव्यग्रे सज्जननियोगमनुष्ठातुमेवावाहितचित्ते सति तदवधानान्तरायभूतः शब्द इव श्रूयते। इव शब्दः शब्द एव वा नवेत्यनिश्चयं द्योतयति। अङ्गेति शब्दस्वरूपजिज्ञासात्वरामवबोधयति।

भीमेति। न खलु न खल्विति सम्भ्रमात् त्वरया वा द्विरुक्तिः।

भवत्वित्यङ्गीकारे। अयं शब्दो भवतु मया चेदं विज्ञातम्।

नेपथ्यशालायां भीमस्य गमनप्रतिषेधश्रवणेन विज्ञातप्रेक्षारम्भः सूत्रधारः कथांशमुपक्षिपति—अगाग्रादिति। नूतनतयेति पदेन भोग्यानां समुपनतावित्यादिपूर्वश्लोकोक्तः सामान्यनयोत्र सञ्चारितः। कुसुमान्वेषणार्थं प्रयान्तं संरोद्धुं अतिसाहसत्वात्कर्म्मणः कलत्रसहितस्तापसो व्रजति। कलत्रं नपुंसकम्।

एवं काव्योपक्षेपणं प्रस्ताव्य नटीसूत्रधारयोर्निष्क्रमणमाह—निष्क्रान्ताविति। कथावस्त्वंशस्य स्थापनात् स्थापनैषा। सेयं त्रिविधा। श्रुत्वास्थापना स्मृत्वास्थापना कथास्थापना चेति। तत्रेयं कथास्थापना। इति सूत्रधारप्रक्रिया॥

अगाग्रादित्यादिश्लोकसूचितकथांशानुगुण्येन पात्रमवतारयति तत इत्यादि। सूत्रधारप्रक्रियापरिसमाप्त्यनन्तरमित्यर्थः। अत्र गन्धमादनपर्वतप्रदेशो रङ्गः।

सौगन्धिकपुष्पाहरणरूपादतिसाहसात्कर्मणो भीमं निवर्तयितुमभ्यागतः अध्वश्रमेण दृढं परिश्रान्तस्तापसः आत्मानं विश्रमयि-

ष्यन् गृहिणीं स्वशरीरशुश्रूषायै नियोजयति—पादाविति। निर्झरजलस्येतरजलापेक्षया नैर्मल्यम्। कम्पितं प्रवेपितं तेन बलहीनं भुजयोर्द्वयं, आमूलतः मूलादारभ्य। 'मुग्धः सुन्दरमूढयो'रित्यमरः। अध्वगमनरूपव्यासेवनेनोत्पन्नस्तापसस्य श्रमः। स च गात्रसंवाहनमुखविकूणननिश्वसिताङ्गमर्दमन्दपादोत्क्षेपणादिभिरत्राभिनेयः।

स्वपतिशुश्रूषायामनभिमुखी सा मार्गस्यानतिदूरत्वावबोधनेन पतिनियोगमाक्षिपति—एत्तिअम्मत्त इति।

मुग्धे इत्यादि। अभिभूतानां व्याप्तानाम्। सञ्चारादिकमपरचेष्टितम्।

पराश्रयी जनः स्वार्थादपि परार्थं बहुमनुत इत्याह—पश्येति। वृत्तैः सद्भिः सौशील्यादिभिः। शत्रूणां सुयोधनादीनां कूटकापटप्रयोगेण क्षपिता नाशिता विमलश्रीयशोमानभोगाः येषां ते। कल्पशब्दो तुल्यवाची। भोगावासे भोगयोग्ये।

कहं पुणेति। याज्ञसेनी द्रौपदी। अति साहसे कर्मणीति शेषः गन्धमादनाचलात् कल्हारकुसुमाहरणरूपे कर्मणीति तदर्थः।

नन्वित्यादि। तदेतद्वर्त्तते तस्य कारणमस्तीत्यर्थः। किमिति सामान्येन निर्दिशति—हृदयमित्यादि।

स्त्रीणां साहासिकत्वमुदाहरति—तथाहीति। तथाच रामवनप्रवासस्य दशरथनिर्याणस्य च कैकेयी एकैव कारणमभूदिति तात्पर्यम् सद्गुणा एव भूषणं यस्य, विधनं मरणम्। केकयेन्द्रतनूजा कैकेयी।

एहीति। एहि तावत् शीघ्रमागच्छेत्यर्थः सर्वथा कथञ्चित्।

बधिरयतीति। अगमैः वृक्षैः 'पलाशी द्रुद्रुमागमाः।' इत्यमरः। गदावरुग्णैः गदाघातेन व्रणितैरित्यर्थः। इदं चागमैरित्यस्य विशेषणम्। अनुचरं पितरं वायुं अपगर्वमेव कुर्वन् जवेन वेगेन अपहसन्निव यात।

अग्नीति । शरणं गृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । व्यतीतकालत्वादेव प्रायश्चित्तसहितस्य कर्मणो विधिरुद्दिष्टा ।

ब्राह्मणीतापसयोः परिश्रमव्यर्थतां प्रतिपाद्य तयोर्निष्क्रमणमाह —निष्क्रान्ताविति ।

अत्र बदरप्रभो रोमशश्मश्रुः चीरवल्कलचर्मान्यतमपरिधानः लम्बकेश मलिनवेषश्च तापसो रङ्गे प्रवेश्यः ।

अत्र च ब्राह्मणीतापसयोः प्रवेशः असम्बद्धकथाप्राया कथनिका ॥

व्यायोगेस्मिन्, याज्ञसेनीप्रियानुसारेण भीमसेनकृतं गन्धमादनाचलात् सौगधिकपुष्पाहरणं प्रधानं, तस्मिंश्च पर्वते अलकेश्वरस्य सर परिसरप्रदेशाद्विनानुमतिं पुष्पावचयप्रवृत्तस्य तस्य सरोरक्षिणा राक्षसेन सह युद्धं, पुष्पावचयानन्तरं मार्गमध्ये कदलीवनस्यैकस्य मानश्रृङ्गोत्पाठनेन दीर्घरोषेण तत्स्वामिना जरद्वानरेन्द्रेण सह युद्धं, अनवगतपरस्परभ्रातृभावयोरेतयोः पुरन्दरसन्देशानुरोधनागतस्य प्रियासहितस्य विद्याधरस्य मुखात् भ्रातृत्वावगमनं च प्रतिपाद्यं वस्तु ।

भीमसेनं रङ्गे प्रवशयति—ततः प्रविशतीत्यादि । आध्मायमानशंखः । शब्दाप्यमानः कुसुमावचयप्रकरणेस्मिन् वनप्रदेश एव रङ्गः ।

स्वकीयमौद्धत्यमाह—एषभो इति, अहमस्मीत्यर्थः ।

व्यायच्छन्निति व्यायच्छन् गदाघट्टनरूपं व्यायामं कुर्वन् कुलं यूथं त्रासयन् भयापयन्। 'दोर्दण्डाहिण्डितोद्यद्भ्रमितनिजगदाघट्टनैर्वृक्षषण्डान् पिष्ट्वा पुष्टाभिमानः क्षुभितमृगघटा धावयन्तं निनादैः' इत्ययं पद्यभागोत्र संवदति । उरःक्षिप्ताम्बुवाहस्तुतैः मेघमण्डलस्य भीमस्योरसा सह संघर्षो जातः । उच्चप्रदेशस्थितत्वात् । तेन च मेघो वृष्ट इत्यर्थः । अम्बुभिः उद्वेलीकृतासिन्धुः उत्क्रान्तो वेलामुद्वेलः उद्वेलीकृतः सिन्धुः समुद्रो येन सः । पाञ्चाल्याः मनोनुकूलानि कुसुमान्यानेतुमिच्छन् । गुरोर्मरुतः संघर्षादिव अनेन वेगाधिक्यं सूचितम् ।

अहमारूढवान् असीति शेषः।

तदहमिति—प्रभवं उत्पत्तिस्थानम्।

अहो इत्यादि–भीरूणां दुष्प्रवेशत्वप्रतिपादनेन दृढचित्तस्य स्वस्य सुगमतां व्यञ्जयन् वनदृष्टं अजगरकबलितकमाह—अन्तर्गुहेति। गुहाया अन्तर्भागे उद्गतः यः महांश्चासावजगरश्च, अजगरो वाहसः। तस्य मुखे या दंष्ट्रा तया आकृष्टचरणम्। अत एव अतीव गर्जन्तम्। पुनः कीदृशमित्याह—दंष्ट्राग्रेत्यादिनखमित्यन्तं। दंष्ट्रायाः सिंहस्येति शेष। अग्रभागेण कर्षितं यत् पृथुकुम्भतटास्थि तेनास्थ्ना सह वल्गन्ती या ग्रीवा तस्यां निखातो निपातितः यो नखः येन तादृशम्। द्विपेन्द्रम्। एष इति सन्निहितमाह। अभिनेयेषु नृत्तेषु मध्ये बहुकृच्छ्र-साध्योयमजगरकवलिताख्यः।

कुसुमान्वेषणसमये दृष्टं विशेषं वर्णयति—नृत्यन्तीति। चषकः पानपात्रम्। गोष्ठी समाजः। 'मधुरोपदंशमसुरैरि'ति पाठः समीचीनः। मैरेयासवौ मद्यविशेषौ, तथाचोक्तम्—मेषशृंगीत्वक्क्वाथाभियुतो गुडप्रतीवापः पिप्पलीमरिचसम्भारस्त्रिफलायुक्तो मैरेयः कपित्थतुल्यफाणितपञ्चतौलिकप्रस्थमधुनश्चासवयोगः सुराकल्कतण्डुलाभ्यां निष्पन्नो गुडस्तत्र निक्षिप्यत इति।

अहो इत्यादि। अहोतुखल्वित्याश्चर्यवाची। रमणीयवस्तु-विषयाणां मनोहरद्रव्यभाजां वनान्तराणां विविधवनानां अनन्तता अपरिमितता।

मणीति। मणिफलकवत्सुन्दरा या स्वर्णडोला तस्यां अधिरूढा आसन्ना त्रिपुरजयिनिबद्धं श्रीपरमेश्वरमधिकृत्य प्रस्तुतं गेयं गीतं असकृद् गायन्ती, श्रवणयुगलयोर्लोलन्ती चञ्चले कुण्डले श्रवणाभरणे ताभ्यां आमृष्टौ परामृष्टौ गण्डौ करटतटौ तादृशी एषा आकर्षणीयमूर्तिविभवा मुग्धसिद्धाङ्गना मम गतिं निगलयति प्रति-बध्नातीव॥

सौगन्धिकपरिमलवाहित्वादतिशीतलत्वाच्च वायोः जलाशयस्य सन्निहितत्वमुद्दिष्टं स्पष्टयति—अयं हीत्यादि। जनकः सुखं परिष्वजन्

आश्लिष्यन् यथा पुत्रस्य शरीरं यथा रोमाञ्चकञ्चुकितं करोति तथा। उपमानप्रवचनमिदम्।

यावदिति, उपसर्पामि उपसर्प्स्यामि।

स्वाकृतिप्रकृतिदर्शनेन यक्षराक्षसगणैः सम्भावितमात्मनोऽन्तकत्वं विदन्नाह—अये इत्यादि, वृकोदरस्य तावन्मात्रं स्थौल्यं गदावत्त्वं च मनुष्यजातावेव इतः पूर्वं तैर्न दृष्टमिति ते कान्दिशीका जाताः।

हैमा इति। मरकतमयैर्विद्रुममयैश्च निर्मलैः नाळैः अभिरामा मनोज्ञा हेमवर्णा अच्छे पयसि। स्थिता इति शेषः। अमी पद्मानां कल्हाराणां च निकराः समूहाः निर्मलस्फटिकशिलानिर्मितेषु वप्रेषु सौधेषु छायामात्रेणागताः सन्तः मधुपानविषयिणां भ्रमराणां झंकारैः संलक्ष्यन्ते॥

तद्यावदिति। यावदिति वाक्यभूषणम्।

सगर्वमिति। अत्र च गर्वः बलविभवेनोत्पद्यते, स च धर्षण-वाक्पारुष्यादिभिरभिनेयः।

कुसुमावचयप्रवृत्तावात्मनो धीरोदात्ततां निर्भीकतां च स्वयमेव प्रकटयति—कुसुमानीति। हरामि हराम्येव। निवारयतु अस्मात्कर्मण इति शेषः।

पार्वतीप्रियानुसारेण पुष्पाहरणप्रवृत्तस्य भीमस्य पर्वतावतरणं, तत्र च परिभ्रमणं, जलाशयपरिसरे पुष्पदर्शनं, तदपहरणं च निर्वर्तितम्। इदानीं स्वाज्ञामनधिगम्य छन्दतः पुष्पाणि हृतवतस्तस्य कर्म चेदमसहमानः वित्तेशपुष्करिण्या आरक्षकपुरुषः राक्षसः कश्चिन्नाम्ना क्रोधवश इति युद्धार्थमागच्छति। तं राक्षसपात्रं रङ्गे प्रवेशयितुं तत्पूर्वरङ्गभूतं तस्यैव दुर्व्याहृतं अन्तर्जवनिकातो सभिका-नवबोधयति—नेपथ्ये इति।

आ दुरात्मन्नित्यादि। ततः प्रविशतीत्यादि।

कुसुमान्यपहर्तुमुद्यत त कुरुवयं क्रुधियः कुबेरभृत्याः।<br>
कुतुकात्समुपेत्य योद्धकामाः कुसृतिज्ञाः परिभाषिणो न्यरुन्धन्॥

अत्र श्लोके बहूनां राक्षसानां प्रवेश उक्तः। तत भीमसेनकृत-कुसुमावचयाव्यवहितोत्तरक्षणे सक्रोधः राक्षसस्य क्रोधं उत्फुल्ल-नासापुटोद्धृतनयनसन्दष्टोष्टपुटादिभिरभिनयेत्। तथा च नाट्यवेद,
"————कुटिलोत्कटमुखः सन्दष्टोष्ट स्पृशन् करेण करम्। धृष्टः स्वभुजप्रेक्षी शत्रोर्नियन्त्रणं कुर्यात्॥" इति।

इहहीति। इहहि इदानीं खलु।

दुष्कर्मेति दुष्कर्मसञ्चयकृतागसि विगीतकर्मसमूहैः कृतापराधे अस्मिन् जीवलोके जीवग्रहणरूपे महे व्यापृतः अचेतनानामपि कुसुमादीनां शैलभवानां जीवसत्ताप्रतिपत्त्या इयमुक्तिः। तथाहि—

"शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा।
नानाप्रहरणाद्याश्च ते प्राणिन इति स्मृता॥"

त्वं गर्वितः खल्वसीति व्याकोपेनोक्तिः। अत अस्मिन् क्षणे अव्यवहितक्षणे निशितखड्गनिकृत्तदेह अतितीक्ष्णनासिना विदारित-कलेबरं त्वां यमस्यान्तिके यो रस तज्ज्ञातारं करिष्ये।

सावधानमिति। पुरस्थ पुरुषो मनुष्यो राक्षसो देवो वेति सावधानेन निर्वर्णनं युक्तदण्डविधानार्थम्। अनन्तरं मनुष्यं बुध्वा निस्सारभूतं तं व्यापादयितुं आयुधस्यावश्यकतामाक्षिपति—अप-विद्धायुध इति।

ततश्च भीमस्य स्थौल्यं बलीयस्त्वं आयुधवत्त्वं चाकलय्य आयुधस्यात्यावश्यकतां मनसि निश्चिन्वन् पुन खड्गोद्धारमाह—पुनः खड्गमुद्धृत्येति। अपशदशब्दोऽधमवाची।

खड्गेनेति खड्गेन असिना क्षतविग्रहस्य रुग्णकलेबरस्य तव पिशितैर्मांसै क्लृप्तो निश्चित य उपदंश तदनन्तरं, पानकर्मणि उपदंशभूतानि क्रव्याणीत्यर्थ। कोष्णं ईषदुष्णं आस्नासवं रक्तरूपं मद्यं पानीयाधारभूतस्य पात्रस्यावश्यकत्वादाह—कपालेति। कपालरूपश्चषकः पानपात्रं तेन कण्ठावधि रसयन्, उपदंशखादना-नन्तरं पानमाचारः आन्त्रस्रग्गुणमुद्वहन् आन्त्ररूपं मालां धारयन्, अस्थिसमूहैर्नैपथ्यं विरचयन् आहितरङ्ग। नृत्यन्मत्तविलासजां नृत्यतो नर्तनं कुर्वतः मत्तस्य आसवसेवनेन सम्भ्रान्तचित्तस्य विला-

सेन ततइतो विहारेण सञ्जायमानां धनपतेः धूर्जटेः प्रीतिं अहं करिष्यामि । मत्तविलासप्रहसने हि सिंहविष्णुपुत्रमहेन्द्रविक्रमवर्म्मप्रणीते गृहीतकपालीरूपः पिनाकी देवसोमासहितः सुरां पीत्वा कपालविभवस्ततइतो विहरति । अत्र च सरःस्वामिनोनुज्ञामनधिगम्य कुसुमावचयप्रवृत्तं त्वां हत्वा तव मांसोपदंशपूर्वकेन रक्तपानेन हृषितोहं तवान्त्रमालां धृत्वा सरःस्वामिनोलंकेश्वरस्य पुरतो नर्तिष्य इति दण्डविधानं स्वस्वामिप्रीतिकरं विभीषिकारूपं प्रसञ्चक्षते राक्षस

हनिष्यन्तीति, मनुष्याः कर्त्ता, राक्षसान् कर्म्म, विपरीतलक्षणया अर्थः ।

अत्र च निर्वर्त्यमाने पक्षप्रतिपक्षसंवादे भीमसेनोक्तं स्वस्य समीरणांशत्वमपि राक्षसो मिथ्येत्याह—अद्भुतमेतदिति ।

जातिसाम्यात् परस्परविरोधो विरुद्ध इत्याह—किं देव इति

देवांशभूतत्वेपि नाहं बिभेमीत्याह—अथवेति ।

समीरण इति धनाधिपः कुबेरः

किंकिमिति । किंकिमिति रेरे इति च राक्षसवचनश्रवणसञ्जातात् कोपात् द्विरुक्तिः । कीटकशब्दो निस्सारत्वबोधकः ।

भीमः स्वकीयमपदानं वर्णयति—गुप्ता इति । पुङ्गवः श्रेष्ठ मृदितवान् हतवान् ।

गदयेति । भग्नः क्षतगात्रः । प्रहरणमपविध्य भीमस्य गदाघट्टनं परिमृजन् राक्षसः कान्दिशीको जातः ।

कुसुमलाभरूपकार्यस्य साधितप्रायत्वात् गन्धमादनाचलात्प्रतिनिवृत्तो भीमसेनः मध्येमार्गं कदलीवनस्यैकस्य मानश्रृङ्गमुत्पाटयति स्म, तत्स्वामी च हनुमान् 'रामं स्मरन् ससुखमत्र तपः प्रकुर्वन्' स्थितो वृत्तान्तं ज्ञात्वा दीर्घरोषो बभूवः । अज्ञातसोदरभावश्च भीमस्तेन सह युद्धायासज्जत । एतयोश्च तुमुलं युद्धं सम्भाव्यमानं विदित्वा शक्रशासनेन स्वर्लोकादेतयोः साहोनिवेदयितुमभ्यागतः सहचरीसहितो विद्याधरः । तं चोत्तमपात्रं रङ्गे प्रवेशयितुं तत्पूर्वरङ्गभूतां कथानुपूर्व्यनुगुणां नेपथ्यवाचमाह—नेपथ्य इति । अत्र च विचित्र-

श्मश्रुः केशमुकुटवान् गौरवर्णः विद्याधरो प्रवेश्यः। विद्याधरी च मुक्ताभूयिष्ठभूषणा चित्रवेषपरिच्छदा कार्या ।

क्षेत्र इति । क्षेत्रे कुले। भुवनस्यायुः तस्य। स्वैरं छन्दतः। प्रियाकृते याज्ञसेन्या अलंकरणार्थम् ।

पवनलीलां वर्णयति—तिर्यगिति । वप्रैः प्रतिहतः संघृष्ठः अयं पवनः सुमेरोः कनकाचलस्य शृङ्गान्तरे कूटेषु। नौ आवां तिर्यक् पार्श्वतो विकम्पयति । चालयति । मुहुः घूर्णयते । ततइतो गतागतमादधानः डोलीकरोति डोलाकेलिवत्कुरुते । मधुमदस्येति उपमानप्रवचनम् मधोरासवस्य मदोयथा पार्श्वतश्चालयति घूर्णयते । गतागतदिति मादधाति तथेत्यर्थ ।

मारुतपीडाबाहुल्यात् स्वैरसञ्चारात्तमा पतिसहायमपेक्षते—णाहेति । त्वरया द्विरुक्तिः ।

दुर्विणीदेणेति। यदि विनीत स्यादयं तर्हि नैवमुपद्रवं दद्यादिति भावः । हतक इति नैराश्यात्

अवहितेति । विलोलां वायुपीडया चञ्चलशरीरां अत एव मामभित पतन्तीं त्वां गृहीतुं, हृदयं चाक्षिणी च हृदयाक्षीणि अवहितानि दत्तावधानानि हृदयाक्षीणि यस्य सः तादृशम् । त्वां गृहीतुमहमेकाग्रचित्तः एकाग्रदृष्टिश्चास्मीति भावः । पुनरप्यात्मानं विशेषयति—व्यायतं दीर्घं उद्घूर्णं ग्रहणार्थं सज्जं च बाह्वोर्द्वितयं यस्य तादृशं मां एतादृशप्रयत्नविशिष्टमपि दुर्निवारप्रवृत्तिः दुःखेनापि निवारयितुमशक्या प्रवृत्तिर्यस्य सः अयं प्रततगमनो वायुः । विपरीतो विधिरिवेति साम्योक्ति । अननुकूलं दिष्टमिव वन्ध्ययत्नं अवकेशिनं विधत्ते । पुरुषकारबलिष्ठमपि कार्यं यथा दैवस्य विपरीततायां न फलति तद्वदित्यर्थः । उपमा ।

भोः प्रभञ्जनेति वायुदेवताभिसम्बोधनम् ।

भवन्मित्रस्येति । कल्याणं हनुमद्भीमयोः अन्योन्यभ्रातृत्वावबोधनरूपम् ।

अये इति। अये इति विस्मये। पूर्वं विपरीतो वायुरिदानीं प्रियकार्यविज्ञापनादनुकूलो जात इत्यर्थः।

सप्तर्षीति। सप्तर्षिमण्डलस्य नवग्रहाणां च मध्यस्थानवर्ती। चण्डवेगः क्रूरगतिः।

अवनिचक्रस्य वृत्ताकृतित्वादुत्प्रेक्षते—छत्रमात्रेति। इदमपीत्यादि अविभावितं अविज्ञातम् यावदिति वाक्यालङ्कारः।

णाहेत्यादि। वृक्षलतादिनिलया गुल्माः।

मुग्ध इति। मुग्धे मूढे। 'मुग्धः सुन्दरमूढयोः' इत्यमरः।

"व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद् गतिम्।
विकीर्णवसना चैव तथा भूगतलोचना॥
प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च।
आरोहणावतरणं कार्यमर्थवशात्तथा॥"

इति नाट्यशास्त्रानुरोधेन विद्याधरीविद्याधरयो रवतरणमाह—अवतरणं नाटयत इति।

प्रासादैरिति। संरुद्धतारागणैरिति प्रासादस्योच्छ्रायः सूचितः मौक्तिकमालिकापरिगतप्रान्तै मालैव मालिका मौक्तिकमालया मुक्ताहारेण परिगता परितो व्याप्ता प्रान्ता परिसरप्रदेशा तादृशैरिव स्थितैः गृहैरुदवसितैश्च भूषिता अलंकृता। उत्प्रेक्षणमिदम्। रागानन्दितखेचरैः रागालापेनानन्दिता खेचरा देवयोनयः तैः। वरवधूगीतैश्च मनोहारिणी स्वर्गश्री अलका इति नाम्निपरं निश्चितो भेदः तत्त्वतस्तुभेदो नास्तीत्यर्थः।

णाहेति। को णु खु एसो इति शब्दस्वरूपजिज्ञासायां तात्पर्येण सजलजलधरस्तनितगम्भीरः जलपूर्णस्य वारिवाहस्य निर्घोषवद् गम्भीरः। 'स्तनितं मेघनिर्घोषः' इत्यमरः।

मेघनिर्घोषं निशम्य अन्यं द्विपेन्द्रं गर्जन्तं शङ्कमानः कश्चिद् गजः दीर्घरोषः प्रतिनिनदन् स्वकं दन्तद्वयं वृक्ष एकस्मिन् न्यखानत् तं च निखातं पुनरुत्क्रष्टुं नैव प्रभवतीतीदं वर्णयति—गर्जन्तमित्यादि। द्विपेन्द्रं शङ्कत इति द्विपेन्द्रशङ्की। आमूलं मूलभागपर्यन्तं, तौ निखातौ न्तौ।

हद्धीति। बलेन गौरवं प्राप्ता बलगर्विताः। प्रमादः अनिर्ज्ञानेन जायमानो दोषः।

सखेत्यादि। कपीश्वरस्य हनुमतः। कदलीवनमिति नाम। निकटवर्ति आसन्नवर्ति, स्फाटिकं स्फटिकवत् द्योतमानम्। प्रभावान्तर्हितौ तिरस्करिणीप्रभावेण तिरोभूतशरीरौ, चेष्टितं प्रवृत्तिं, अवगम्य ज्ञात्वा।

गगनावतरणश्रमखिन्नायाः स्वप्रियाया विश्रमावश्यकतां प्रतिपादयति—शुष्यदिति। हे सुतनु, शोभनशरीरे शुष्यद्दन्तच्छदकिसलयं दन्तोदकसंप्लवाभावात् शोषीभवन् यो दन्तच्छदः दन्तप्रान्तभागस्थमांसं तदेव किसलयं पल्लवं तादृशम्। स्वेदैः स्वेदकणैः। गण्डयोः कपोलयोः बद्धः रागः रक्तिमा तादृशम्। तिग्मभासः चण्डकिरणस्य सूर्यस्य प्रभाणां किरणानां जालैः समूहैः ग्लपितं ग्लानिं प्रापितं ते वक्त्रं मुखं इह इदानीं विश्रमं सुखं वाञ्छतीव॥

अहो इत्यादि। प्रियायाः पार्षत्या अभिलाषः कुसुमाहरणरूपः। अवशं अस्वाधीनम्। उद्देशः परिसरप्रदेशः।

हनुमतो कदलीवनं वर्णयति—वातेरित इति। वातेन वायुना ईरितश्चालितः अत एव प्रचलत् प्रकर्षेण चलत् यन्नीलदळं तेनाकुलो व्याप्तः। पक्वैः पाकवद्भिः परिणतैः फलैः शबलवर्णं प्रापित अयं कदलीवनप्रदेशः विद्रुमलताविटपैः प्रभिन्नः भेदं प्रापितः त्वङ्गत्तरङ्गपरिकीर्णः चलन् यो तरङ्गः वीचिः तेन परिकीर्णः परितो व्याप्तः अम्बुराशिः समुद्र इव आभाति शोभते, उपमालङ्कारः।

यावदित्यादि। महानुभावस्य वीरसत्वस्य, परिग्रहः स्थानम्।

रक्ष्यभावाद्वनवृक्षेषु परिणतफलसत्त्वे पक्षिमृगादयो यथेष्टं तान्यपहरेयुः। अत्र तु कदलीवने नैकमपि वृक्षगतं फलमन्यद्वापहृतम् तस्मात्स्वामिनैकेन प्रकृष्टविक्रमेण भवितव्यम्। स च क्षात्रतेजस्सम्भूत अधृष्य एव भवेत्। तस्य चाधृष्यतां विगमयितुं सोत्साहोऽहं गुरुवचनान्तरायं आशङ्क इत्याद्याह—न किञ्चिदित्यादि। परतेजःप्रकर्षः पर्वतीयजीवजालानां पराक्रमातिशयः छन्दतो पर्वत-

गतवस्त्वनुभवरूपः। सुयोधनो दुर्योधनः। तेन सह युद्धसमये गुरोर्ज्येष्ठभ्रातुर्धर्मपुत्रस्य वचनमन्तरायोऽभूत्। इदानीं गुरोरसन्निहितत्वात् तथा नेत्याह—नचास्येति। कदलीवनस्वामिनः कोपप्रवर्धनार्थं वनस्य मानश्रृङ्गमुत्पाटयिष्यन्नाह—तदस्येति।

यद्यस्तीति। इह अत्र शक्तिकृताभिमानः आत्मशक्तिप्रवृद्धगर्वः कश्चिद्यद्यस्ति, परेतपतेः प्रेतपतेर्यमस्य पुरं प्रयातु कांक्षेद्यदि सः, प्रकर्षेणोल्लसन्ती या भ्रुकुटिः तया भीमा घोरा या ललाटभूमिः ललाटप्रदेशः तादृशस्य चण्डक्रुधः प्रवृद्धमन्योः मम पुरतः सन्निधौ क्षणायुः अल्पायुः सन् पततु॥

कथांशानुगुण्येन हनुमतः प्रवेशं अन्तर्जवनिकावाग्भिर्व्यञ्जयति—नेपथ्य इति। आः दुरात्मन्नित्यादि। आत्मानमात्मनैव यो न वेत्ति स अनात्मज्ञः तादृशेति सम्बुद्धिः। पराज्ञां समुल्लंघयितुं शीलमस्येति पराज्ञासमुल्लंघनपरः।

जरद्वानरस्य तात्कालिकं स्वरूपं वर्णयति—दृढेत्यादि। दृढविरचितमुष्टिः दृढं यथास्यत्तथा विरचिता मुष्टिर्येन सः अधिकपिशङ्गैः अधिकं पिशङ्गवर्णैः दृष्टिभासां वितानैः प्रसरैः वियत् आकाशं सेन्द्रचापं प्रकुर्वन् प्रावृट्कालभिन्नेपि काले आकाशमिन्द्रचापविशिष्टं कुर्वन्नित्यर्थः।

भ्रुकुटियुत ललाटो फालदेशः यस्य तादृशः, स्पष्टदंष्ट्रांशुजालैः स्पष्टैः स्फुटैः दंष्ट्राकिरणसमूहैः अपरो नरसिंहमूर्तिरिव स्थितः अयं वानरः दृश्यते पुरत इति शेषः।

श्लक्ष्णेति। भुवि भूमौ मुष्टिपातैः मुष्टिघट्टनैः श्लक्ष्णप्रपिष्टवपुषं मसृणं यथा स्यात् तथा प्रपिष्टं वपुर्यस्य स तादृशं, मर्दितकलेबरमित्यर्थः। अत एवान्तकेन प्राणापहारिणा अल्पप्रयासहृतजीवितं स्वल्पेनायासेनापहृतजीवनं त्वां, अक्ष्णो निमेषसमकालं क्षणमात्रेण, क्रव्याद्दन्तसुखचर्वितकीकसं करोमि। क्रव्यादो राक्षस तस्य दन्तैः सुखं यथा स्यात् तथा चर्वितं कीकसं अस्थि तादृशं करोमीत्यर्थः। पर्यायोक्तम्॥

वानरस्यैतादृशपराक्रममसम्भावितं मत्वाह—अहो इत्यादि। किलेति तुच्छार्थः।

स्वस्य प्रभूतबलवत्त्वं स्पष्टयितुं स्वावदानान्याह—स्वैरमित्यादि। स्वैरं छन्दतः। गोष्पदवत् गोष्ठवत्। ऐरावतस्येन्द्रगजस्य दन्ताग्राघातेन व्रणिता अनन्तरं स्थपुटिताः द·तुरांकृताश्च वक्षःप्रदेशा राक्षसानां, तादृशैर्वक्षःस्थलैर्भीषणान् भयङ्करान् नक्तञ्चराणां राक्षसानां गणान् हत्वा, पुरा पूर्वं भयात् रावणात् भीते· दिनकृता सूर्येणापि अस्पृष्टपूर्वा विशिष्टवरसम्पत्त्याभिभूतगर्वस्य रावणस्य नगरे भयात् सूर्यचन्द्रादयोऽपि यथेष्टं न सञ्चरन्तीति रामायणे स्थितम्। तादृशी लङ्का येन प्लुष्टा दग्धा। स वानरोऽस्मिन् जगति न वा विश्रुतः वद। एवं निर्वर्तितबहुपराक्रमकृत्यं मां विश्रुतविभवं सर्वोऽपि जानातीत्यर्थः॥

हनुमतस्तव च पराक्रमविषये सुदूरान्तरमस्तीत्याह—सोपीत्यादि।

अहो इत्यादि।

वानरेण सह युद्धप्रवृत्तावात्मनो विगीतत्त्वमाह—किं वदिष्यन्तीत्यादि। फल्गुनोऽर्जुनः।

पुरत आस्त इति। 'तत्पथि निश्चलात्मा पुच्छं निधाय जरसार्त इवात्र शिश्ये' इत्यर्थः।

नापसरणक्षम इति जरद्वानरत्वादेवापसर्तुमक्षम इत्यर्थः।

वाचं निशम्य समुपेत्य कपेर्बलीयान्
वालाग्रमस्य नहि चालयितुं शशाक।
व्रीडानतो गतधृतिर्विवशो विवेकी
प्रोवाच वानरवरं वचन सशङ्क

अयं च श्लोक सन्दर्भानुगुणः।

छन्दत इति स्वैरं कुर्वित्यभ्यनुज्ञावाचकम्'

हनुमन्तमुत्कम्पितुमशक्तो भीमसेनः सुतरां विलज्जितः स्वीयं बलं कौलीन्यं च निन्द्यमाह—धिगिति। नागायुतस्य गजसहस्रस्य यद् बलं तादृशं बलं स्वस्य वर्तमानं धिगित्यर्थः। जिष्णुरर्जुनः।

दुर्योधनं युद्धे निहत्य पाञ्चाल्या मूर्धजान् संयन्तुं भीमः प्रतिशुश्राव । इदानीमेकं वानरमुत्कम्पयितुमप्यशक्तः कथं दुर्योधनहननं द्रौपदीकेशसंयमनं च महत्कृत्यं निर्वर्तयितुं प्रभवेदित्याशंक्याह—प्रीतस्त्वमित्यादि । भोः सुयोधन सम्प्रीतो भव, अनुरूपबलविशिष्टस्य शत्रोरभावादिति तात्पर्यम् । मूर्धजान् केशान् । संयन्ता संयमनकर्ता ।

सम्पादितबलः सन्नुपविष्टो हनुमान् यदि नैवं, भीम उत्कम्पयितुं शक्त एव भवेदित्याह—अहो बलमित्यादि । पोथयामि शिथिलीकरोमि ।

यदीति । स गुरुः ज्येष्ठो हनुमान् स्वजातिभक्त्या वानरेषु जातिसाम्यकृतबहुमानात् स्वयमेव इदं युद्धं श्रुत्वा मामभिगम्य न निवारयिष्यति यदि कपिपिशितेषु पिशितं मांसं विहङ्गमानां पक्षिणां विभागकृतो विवादः इह स्फुटं भविष्यति । यदि मम ज्येष्ठः अत्रास्माद्युद्धान्मां जात्यैक्याद्वानररक्षणाय नाभ्यागमिष्यति तर्ह्यहमेनमिदानीमेव हनिष्यामीत्यर्थः । पर्यायोक्तम् ।

विद्याधरः द्वयोरन्तरं प्रविश्य तयोः साहोदर्यं विज्ञापयति—हनुमन्नित्यादि, असाम्प्रतं अयुक्तम् ।

"अन्योन्योत्क्षिप्तमुष्टिप्रहररवमिळत्क्ष्वेळिताकर्णनोद्यत्-
स्फायद्भीतिप्रधावद्द्विरदनिकरविक्षोभितक्ष्माधरेन्द्रे ।
जन्ये जञ्जन्यमाने पवनतनययोरिन्द्रसन्देशतस्तौ
रुध्वा वीरौ कथञ्चिद् गिरमिति मधुरामाह विद्याधरेन्द्रः ॥"

अयं श्लोकः सन्दर्भानुगुणः ।

झटिति विदितार्यभावो भीमः विनीतभावः सन्नाह—आर्य इति । आर्य इति ज्येष्ठवाची । 'आर्येति पूर्वजो भ्राता' इति भरते ।

वात्सल्यादनुजं समीप आह्वयति—एह्येहीति । अद्य खल्वित्यादि कृतकवचनम् । विदितभ्रातृभावस्य हनुमतः गर्वदोषोपशमनार्थं युद्धप्रवृत्तेः सूचितत्वात् ।

लज्जेति । लज्जया ह्रिया नमत् प्रह्वीभवत् यद्वदनं मुखं तेन

मन्थरं परवशं ईक्षणयोरर्धं तथाभूतं, सम्प्रश्रयेण विनयेन आहृतं सङ्कुचितं यत् करद्वयं तेन रुद्धं प्रतिबद्धं वक्षः यस्य तादृशं, साकूतं साभिप्रायं यत् दर्शनं तेन कृतः एककटाक्षपातः तादृशं, अनुजस्य तव आश्लेषसौख्यं आलिङ्गनसुखं सुधेत्यभेदः अमृततुल्यमिति यावत्॥

आमोदादित्यादि। आमोदात् भ्रातृदर्शनजनितसन्तोषात्। भद्रमुखेति बहुमतं विद्याधराह्वानम्।

हनुमद्भीमयोरप्युपवेशनार्हत्वमाह—नन्वित्यादि।

सर्वे उपविशन्तीति। अत्र च रङ्गे हनुमतो वेत्रासनं भीमविद्याधरयोः कुथासनं गुणमञ्जर्या मण्डलासनं च कल्प्यम्।

विद्याधरवृत्तान्तजिज्ञासया पृच्छति—अथेत्यादि।

अहमित्यादि। इयं सन्निहिततरा।

कुत इदानीमिति, आगतोसीति शेषः।

विद्याधरस्य स्वर्लोकादागमनं विदित्वा भ्रातुरर्जुनस्य वृत्तान्तमन्विष्यति—अपीत्यादि। वृत्तेन चारित्रेण।

किमितीत्यादि। महासत्वोतिगम्भीरः।

अर्जुनस्य महासत्त्वतां निरूपयति—भो इत्यादि।

गुरोः इन्द्रस्य। चित्रसेनो विद्याधराधिपः।

चित्ररथेन प्रेषितायामुर्वश्यां अर्जुनः प्रतिपन्नो नाभवदित्याह—शृङ्गारेति। शृङ्गारवेषेण हृद्योज्ज्वलवेषेण रमणीयः वपुष शरीरस्य प्रकाशः द्युतिर्यस्याः तादृशीं, रङ्गोत्थितां अभिनयनार्थं रङ्गे उत्थानवतीं, शय्यां स्वयमुपागतामिव स्थितां, गुरुभिः समानां तां उर्वशीमुपचरन् परिचरन् लज्जया प्रह्वीभवत् वदनमेव चन्द्रमा तादृशं चकार। नर्तनसमये उर्वश्या नेपथ्यदर्शनेन सर्वेप्याकृष्टचित्ता भवेरन्। अर्जुनस्तु तथा नाभवदिति।

अर्जुनानुष्ठितमतीवोपपन्नमाह—भो इत्यादि।

शक्रनियोगकारिणो विद्याधरस्यागमनकारणं पृच्छति—अथ-

किमित्यादि। अत्रेति शेषः। अथेति प्रश्ने।

अहं खल्वित्यादि। उपह्वरं निभृतम्। युवयोः हनुमद्भीमयोः।

हा राम इत्यादि। हा इति शोके। मूर्छित इति पूर्वमाश्रयभूत-श्रीरामस्मरणादुत्पन्नस्यास्य मोहस्याभिनयः निश्चेतन्यपतनादिभिः कार्यः।

श्रीरामकथाप्रसङ्गात् तद्विषयकं आदरं प्रदर्शयन्नाह—शाखेति। शाखामृगो नगाटनो वानरः। तरोः वृक्षस्य पल्लवमात्रं किसलयमेव सारं यस्य। वृक्षपल्लवमात्रभक्षण इत्यर्थः। यस्य श्रीरामस्य भवतः परिग्रहेणाश्रयेण सतां सदसि स्तुत्यः सद्भिः पूजितोऽभूवमित्यर्थः। इदानीं तु तादृशेन रघुनन्दनेन त्वया विरहितोऽहं जीवितं महान्तं भारमिव अतीव कष्टतः उद्वहामि।

पवनेत्यादि। विगलत् यत् वचनं तदेवामृतं यस्मिन् तादृशे मुखमेवेन्दुस्तस्मिन्। रूपकम्।

श्रीरामस्मृतिसन्तानात् वैदेहीस्मरणजन्यभक्तिप्रकर्षं प्रकाशयति—हा वैदेहीति।

जनकमित्यादि। अशोकवनिकानिविष्टा सीता पुनः श्रीराम-दर्शनमसम्भावितं मत्वा राक्षससम्पर्काद्वरं मरणमेवेति निश्चित्य मरणार्थं बद्धपरिकरा यदा तदा हनुमतो दर्शनात् उज्जीवितप्रत्याशा अभवत्। इतीदमाह—जनयन् पुनर्ममासूनिति। लोकस्तु जनकं विदेहाधिपतिं जनकं मम पितरमाह। वस्तुतस्तु त्वमेव ममासूनां जनक इत्यर्थः। ममासूनित्यन्तं सीतावचनानुवादः। क्षरदास्रमिति क्रियाविशेषणम्।

धीर इत्यादि। धीरो दृढचित्तः। शोकवश्यः अत्यधिकं दुःखाधीनः।

अहो इत्यादि। अवशयति पराधीनं करोति। अत्यायतः अतिदीर्घः।

हित्वेत्यादि। अस्मिन् श्लोके श्रीरामापदानं संक्षेपतो वर्णयति। निकारो दण्डः। सुहृदा सुग्रीवेण। तं लङ्केशम्। अन्यं विभीषणम्।

अद्य म इत्यादि।

अनतिचिरेत्यादि।

